CHANDRA SEKHARA CHAMPU.

A

# POEM

IN

PROSE AND VERSE.

BY

## RAMANATHA.

PART II.

EDITED

BY

PANDIT JIBANANDA VIDYASAGARA B. A.
*Superintendent, Free Sanskrit College.*



CALCUTTA.

PRINTED AT THE SATYA PRESS.

1874.

*To be had from Pandit Jibananda Vidyasagara B. A. Superintendent, Free Sanskrit College of Calcutta.*

पण्डितकुलतिलक-पूज्यपाद श्रीमत् तर्कवाचस्पति
पाद-प्रणीत-प्रकाशित-पुस्तकान्येतानि

# चन्द्रशेखरचम्पूः ।

( उत्तरभाग: )

श्रीमच्छ्रीरघुनाथदेवविभवाह्लादिश्रीसम्भवः,
धर्मार्थमन्त्रिपथाब्जतिग्मरुचः श्रीराजहंसाग्रजः ।
श्रीरामा नवचन्द्रलीविभवा श्रीरामनाथः स्वयम्,
चम्पूं गुम्फितवान् सुधीर्वसुमतीपालीकिरीटान्तः ॥

---

बि, ए, उपाधिधारिणा
श्रीजीवानन्दविद्यासागरभट्टाचार्येण संस्कृता ।

—•:•—

कलिकाता-सत्ययन्त्रे
मुद्रिता ।

शाका: १८२८ ।






॥ द्वितीयोभागः ॥

ततः प्रभाते प्रभयातिरम्यां सभां समासाद्य सितांशुमौलिः ।
कुमारयोरानयनाय राजा सम्प्रेषयामास वरानमात्यान् ॥ १ ॥
तावेत्य सन्तापहरौ जनानां हेमन्तशीताविव कान्तरूपौ ।
प्रणेमतुस्तन्नयनाब्जयुग्ममुद्वेजयन्तौ पितुरिन्दुमौलेः ॥ २ ॥
राजापि देव्या गृहनिर्गतस्य कापालिकस्याकृतितुल्यमूर्त्तीम् ।
मत्वा तु तौ शापविकारितात्मा मुहुर्मुहुर्गूढदृशान्वपश्यत् ॥ ३ ॥

अचिन्तयच्च—हा धिक् कष्टं स्वभावचपला हि स्त्रीजातिः स्वभाव-कपटपेटिका च पुंवचनपटीयसी च ।

अहोऽबलानां प्रबलैव माया व्यवञ्चयन्मामपि यद्विरैषा ।
हा वामतां वामदृशां न कोपि कैरप्युपायैरपहर्तुमीशः ॥ ४ ॥
वंशेमनोरखिलमानवसत्तमस्यजाताककुत्स्थनृपतेस्तनयाप्रिया मे ।
हाहन्तधिग्व्यवसितद्धिमिदन्तदीयंविश्वास एववनितासुनहीतिसत्यं
॥ ५ ॥ किं कुर्मः—

चन्द्रश्चेन्मलिनीकरोति रजनी भानुं तथा निर्मला,
सन्मैत्री दिवसस्य सा यदि सतां हन्तिर्गुणान् शान्तिः।
सत्कीर्तिं यदि धिक्कृतिं वितनुते पीता सुधा हन्ति चेत्,
सत् प्रज्ञापि हि शङ्कदा यदि भवेत् कुर्वन्तु किं कोविदाः ॥६॥

विचिन्तयन्नेवमसुस्थचेता विलम्ब्य राजाम्बरणमुत्थितः सन्।
विसृज्य सर्वान् शयनालयान्तः शयानवद्ध्यानपरो बभूव ॥ ७ ॥

नरेन्द्रपुत्रावपि वासमेतौ क्षीणावुपाचिन्तयतां मिथस्तौ।
हा हन्त राज्ञा ह्यवधीरितौ स्वः किमर्थमित्येव वितर्कयन्तौ ॥८॥

अलब्धविद्यौ किमु हीनवीर्यौ किं दुश्चरितौ किमु लोकपालौ।
किम्भक्तिहीनौ गुरुसज्जनानां ननन्द नावां यदयं पितापि ॥ ९ ॥

नवा सुहृद्भेदकरोऽत्र कश्चिदस्त्येव वा केन च कारणेन।
सन्दूषितौ गूढपदोषगूढेन भेदहेतुं मनसाभ्युपैमि ॥ १० ॥

अबीजतोप्यङ्कुरपल्लवादिक्रमेण तत्तत्फलमप्यकाले।
उत्पाद्य विज्ञानपि मोहयन्ति महेन्द्रजालिप्रतिमाः खला हि ॥११॥

नीचैः स कुद्दालमुखेन तद्वत् मुखेन दूर्वाङ्कुतपूरितेन।
मर्म परेषामुपगम्य हन्तिमाप्नोति नूनं खलपूः खलश्च ॥ १२ ॥

स्वपुं विभेदे निपुणातिगूढा संवञ्चवे दृष्टिमतोपि दक्षाः।
दर्वाः परार्थापहृतौ खलस्य हन्तिच दूतौ प्रकृतिश्च दुष्टा ॥ १३ ॥

विनापराधादहयोपि नैव दशन्ति न स्वार्थकृते हकाश।
परापकाराय भवन्ति नैतौ पराधिकर्त्तुः पिशुनस्य हेतू ॥ १४ ॥

परापकारं खलु निर्निमित्तं कुर्वन्ति हा हन्त खलाः स्वभावात्।
ज्ञातनिमित्तेपि च साधुहन्ता न चापकुर्वन्ति परान् स्वभावात्॥१५॥

धर्मश्च कीर्त्तिश्च परोपकारीलाभः सतां ग्राम्यजनस्य लाभः।
वित्तादिलाभोल्पमतेः खलस्य परस्य सम्पोड़नमेव लाभः॥ १६॥

निरर्थकं जल्पति वस्तुतुल्यं मर्मापरेषां खल उग्र राभः।
दोषेतरे दृक् न भवतामुष्य दोषैकदृष्टेः खलपेचकस्य॥ १७॥

नोक्तिर्न दानं न रतिर्न भोतिर्न शास्त्रशिक्षा नच लोकबोधा।
न केपुरपायाः प्रभवन्ति हन्त खलस्वभावस्य निवर्तनाय॥ १८॥

इदं महद् दुःखतरं वनप्रियः कलैकलापो विरलं ब्रवीति।
इदन्ततोदुःखतरं हि दुर्वाक् काकःकटूच्चैर्बहुरारटीति॥ १९॥

सच्छिद्रोपि न गुणं गृह्णाति, लघुरपि न गुरुयत्नणया निम्नो भवति, जलवन्नीचाभिमुखोपि न प्रणतमभिसरति, वायुरिव छिद्रानुसार्य्यपि न साधुहृदयसुषिरं प्रविशति, शून्यमिव छिद्रेषु प्रत्यक्षमेव लक्ष्यते, न जनावकाशं प्रयच्छति, ज्वलन इवाश्रयाशोपि न साधु प्रकाशते, पृथ्वीव कालेन निक्षेपं हरति, न च क्षमापदं भजते,पुरुषाद[मत्तोन्मतः]इव दूरपरिहरणीयोपिभवति, भजङ्ग इव प्राणान्तं विना न प्रहार्य्यः; खलानामपुण्यजनानां पुण्यजनानामिव दर्शनं—विप्लवबीजानां प्लवगबीजानामिव श्लेष भावसमुपद्रवाय, अभाष्याणामार्हतादिभाष्याणामिव भाषणं पापाय मोहायच, अज्ञानामुपदेशोपि ज्ञानामिवाशेषसम्बोच्छेदाय, अकरुणानां करुणानामिव समागमोहृच्छोकाय, जडानामजडानामिव देशानामभिगमस्तृषिताशाच्छेदाय, जीवितच्छेदाय च, ताडनं शुनामिवैषां कटुशब्दश्रवणाय, एतेषु वाक्प्रयोगोगर्त्तेष्विव बोः प्रतिशब्दश्रवणाय एषां, पालनं उपेक्षा वा रोगानामिवामर्षाय, एभ्यः प्रियवाग्दानं गुड़दानमिव ज्वरोत्प्रकोपाय,

इवगार्पणमेतेष्वसंस्कृतेषु सर्व्वं भस्मेष्विव केवलं भस्मीकरणाय, एतेषु सच्छिद्रेषु पात्रेष्विव स्नेहार्पणमधः पतनाय, किमन्यैरनल्पजल्पितैरेते दुष्प्रकृतय उदासीनमपि पुरुषं क्लेशभाजं कुर्वन्ति, नैतेषु त्रपा अकुलजदारेष्विव, नैतेषु कृपा शाकुनिकेष्विव, नैतेषु स्नेहः पांशुलेषु भूभागेष्विव, नैतेष्वभयं श्वापदेष्विव, नैतेषु गौरवं दृष्टिमहत्स्वपि तूलभारेष्विव, एते धृष्टा वामा इव विपरीतरतिप्रगल्भाः, कालरात्रयोऽमी मलीमसपक्षाश्रिताः अदक्षिणायगा दिवसा इव दिनं दिनं जनानां सन्तापं वर्द्धयन्तोविवर्द्धन्ते छलीकृतचणदाश्च, दुर्य्योधन इवाजातशत्रावपि जातशत्रुभावाः, दुःशासनो दुर्मुखोपि धृतराष्ट्रप्रियः कर्ण इव पुरुषैकघातशक्तिगर्वितः, शकुनिरिव धूर्तविद्यया धर्म्मवञ्चनेन धनापहारचतुरः, तत्रपिठरेष्विवैतेष्वणीयानपि स्थापितः, सर्षप इव विश्वासः स्फुटत्येव।

अन्धोबधिरोमूकः सुदृष्टिमान् सुश्रवाः सुवक्ता च।
सदसत्क्रिययोः खल इति चित्ततरः कोपि दुर्ज्जीवः॥ २०॥

परपरिवादे तु खलोगुणवादे सज्जनोविज्ञः।
आद्यः परापकारे कृती तथान्यः परोपकारे च॥ २१॥

उद्घाटयेत साधुमुखं कथाभिः खलाननं नेङ्गिततोपि विद्वान्।
सुगन्धिदुर्गन्धिविलोपपूर्णकुम्भाविमौ वासविभासदौ नृणाम्॥२२॥

तत् किमिदमप्रतीकारमापतितम्?—

अथ प्रतिद्वन्दितया गुरूणां स्थातव्यमैन्द्रेपि पदे न तावत्।
न क्षुद्रवस्यापुरपजीवितव्यं इन्त्यात्मनोहा निरयप्रदाता॥ २३॥

वने निवासोऽकृतपौरुषाणां यद्यप्ययुक्तो नृपसम्भवानां।
पारत्रिकी पौरुषमेति युक्तस्तदत्र नः स्वारसिकः प्रयासः॥ २४॥

इति निश्चित्य——

निष्क्रम्य दूरं मृगयाछलेन छलादमात्यानपि वञ्चयित्वा।
प्रविश्य दुर्गाटविकां हिमाद्रेः क्वचित् कुटीं चक्रतुरम्बुकूले॥२५॥

अथैकदा तद्विजने जनेशो जातानुजातोजनकावगीतः।
विस्मापयन् विस्मतमः सुनन्दोभ्रातायजं भ्रातरमभ्यवादीत्॥२६॥

आर्य्य! दशामिमामावयोः पश्यन्विश्वकर्त्तुर्विचित्रां क्वतिशक्ति-मवधारयामि, यतोजगदानन्दकन्दस्य भगवतश्चन्द्रस्य वंशे समुद्भूतयोः सप्तद्वीपवसुमतीवर्त्तिनश्चन्द्रशेखराततरणिवंशावतारता-रावतोजठरजातयोरधिगतसकलशास्त्रयोः प्राप्तपौरुषयोरपि पितुः सकाशादवधोरणीयमकस्मान्महारण्यप्रवेशः। सत्यं, प्राक्तन-कर्मणां प्रारब्धानां फलमपरिहार्य्यं, विषयफलानि फलानीव कालेन विरसानीव भवन्ति, सुखान्यपि दुःखबीजानीति; पश्य—उपभुक्तानि तानि स्मृतिपथमारुह्य पीड़यन्ति नत्वननु-भूतानि तथाहि—

तैस्तैः शून्यमवस्थितं प्रियजनैः शून्यैव दृष्टिस्तया,
सम्पत्त्या परमेष्टया परिजनैः शून्याः समस्ताः क्रियाः।
शून्या स्नेहपरीतया श्रुतिरियं वत्सेति मातुर्गिरा
ध्यायं ध्यायमिदं मुहुर्जगदहो शून्यं समीक्षामहे॥ २७॥

अपिच—उद्यद्बालसुधारुचेरिव कलापूर्त्तिं समीक्ष्यावयो-र्भूयः स्नेहपरम्परापरिणमत्प्रोत्साहलक्ष्मीक्षवां।

तां दृष्टिं मम मातुरद्य विकलां वास्पावलिव्याकुला-
मन्तश्चिन्तयतीवत प्रतिपदं खेदेन विश्राम्यति ॥ २८ ॥

अपिच—वीरश्रीयुवराजराजनिवहाः चोणीमिलन्मौलय-
स्वामीते प्रणमन्ति मन्त्रिण इमे सेनाधिनाथाः परे ।
एते भृत्यभटा इमा गजघटा दृष्टिप्रसादं कुरु
श्रीमन्नित्यनिशं शृणोमि न पुनर्वाचः प्रतीहारिणाम् ॥ २९ ॥

अपिच—श्रीमच्चन्द्रभृतः कुमारसदृशः श्रीमान् कुमारीजय-
तुग्बैरद्य मधुव्रतः शिरसि भो ! भूपास्तदाज्ञां कुरु ।
युद्धे शानिततातसोदरसुहृच्छोकचतं स्वान्तरं
मत्पादाब्जरजोभिरद्य शिरसा वन्द्यैः सुसन्धीयताम् ॥ ३० ॥

इति निर्जितप्रत्यर्थिपृथ्वीपतिषु नेदृशी लिखनपरिपाटी श्रुतिमानन्दयति ।

अन्यच्च—आखेटश्रमशान्तयेचणसुखं यस्येच्छतः सोत्सुकै-
र्भूमीपालतनूभवैः परिजनीभावङ्गतैः सङ्गतैः ।
स्वैः स्वैः प्रावरणैः पटैर्विरचिता चित्रा पुरी दृश्यते
स त्वं पर्णकुटीं स्वपाणिरचितामावस्तुमाकांचसि ॥ ३१ ॥

अन्यच्च—यो विश्रामगृहेपि तैः चितिभुजां विज्ञप्तिविज्ञापकैः
काव्यालापसकौतुकैरपि जनैः पूर्णोभवान् वीचितः ।
एकः पर्णगृहे निरस्तविभवः स त्वं कथं वर्तसे
नाद्य त्वां खलु कोपि पृच्छति जनः पश्यामि जीवन्निदम् ॥ ३२ ॥

प्रपन्नयोः स्वीयगुणोपपन्नयोर्निरागसोः प्राग्रपितुः सकाशात् ।
कस्मादकस्मादवधीरणीयमागाङ्गामकरीव हन्तुम् ॥ ३३ ॥

धर्मे स्थितान् प्राप्तनयान् समर्थान् श्रीरामधर्मात्मजनैषधादीन् ।
तां तां दशां दर्शयतात्यदर्शि धात्रा बलं स्वं पुरुषप्रयत्नात् ॥ ३४ ॥

विधातृवश्ये क्षणमात्रदृश्ये भोगे पुरः कालभुजङ्गदश्ये ।
स्पृहालुताकामतिमज्जनानां मुहुर्मुहुर्मोहनिदानदश्ये ॥ ३५ ॥

सुखानि दुःखैकनिदानभूतान्यतः सुसिक्ता नियतो दहन्ति ।
हा हन्त शश्वत्स्मृतिमागतानि मोहात् पुरा भुक्तविषोपमानि ॥३६॥

अगणय्य कृतान्तमुद्यतं हननायोत्सवसोत्सुकान् जनान्* ।
अनुचिन्त्य च हासविस्मयौ हृदि कम्पोरुदितश्च जायते ॥ ३७ ॥

हत्वारातीन्बंधुमानन्य भूयो भुक्त्वा भोगानीप्सितानीह लब्ध्वा ।
किंवा प्राप्तं पूर्वजैस्तैरशान्तैः किन्न प्राप्तं शान्तिसन्तोषभाजा॥३८॥

प्रतिहतसुखमानमेकचिन्तः, स्पृहयति नीतिविदत्र राज्यखण्डं ।
यदि पुनरमुना भवत्यखण्डं, परमपदं किमतःपरं गरीयः ॥३९॥

तैस्तैः क्लेशैः सतताततैर्दुष्कृतैर्वा मानं भोगान् योगिनेवेह हित्वा ।
येयं भूतिर्लभ्यते सा दिनार्द्धं विश्वास्या चेत् साधु सर्वे प्रयत्नाः॥४०

वञ्चयित्वा गता या नो रमा रामेव चञ्चला ।
आगतायां पुनस्तस्यां कोविश्वासोऽथ का रतिः ॥ ४१ ॥

अध्यापयन्ति नीतिज्ञा न विश्वास्याः स्त्रियः क्वचित् ।
अविश्वास्याग्रगण्यान्ते विश्वसन्ति कथं श्रियम् ॥ ४२ ॥

इयंतु चञ्चला चञ्चलेव क्षणरुचिर्जलमलिनशून्यहृदये प्रकाशते, स्वयं चपला स्वानुरक्तं स्तब्धं करोति, स्वयं वैश्रवणसंवर्द्धिनी परितोषिजनफूत्कारेषु श्रवणं नाशयति, छतसुदर्शनसुदर्श-

* "स्वजनान् स्वदशाश्च ताः पुरीव्यपजातास दृढाशयाश्रितान्" पाठान्तरमिदम् ।

मापि स्वाधिष्ठानजनमङ्गीकरोति बहुकण्टककोषान्तर्गतिर्नो कि-तवबीजावलिरिव समुपभुक्ता किलोन्मादकरी मधुविषः प्रियेति कटुकरसमुत्पादयति, जलराशिजातेति जडराशिष्वतिप्रीति-मती वसति, दोषाकरसहजेति दोषाकरेष्विव स्निह्यति। एना-माश्रितय मत्ताः प्रमत्ताः सुरासुरेन्द्रनरेन्द्राः कां कां विपदं-नानुभूतवन्तः, कुलटेव पितुर्भोग्या सती पुत्रस्यापि भोग्या भवति, राजगृहाच्चाण्डालगृहमपि गच्छति, तेनेयं न साधुजन-संस्पृश्या, हृदयनिपातायैव जनमूर्द्धमारोहयति, बालिकाबालु-काकन्दुकमिव।

विषयाविर्वृतिं प्रेप्सुर्धावतेव मनोमृगः,
प्राप्ताप्राप्तेव सापैति मृगतृष्णाम्बुसन्निभा ॥ ४३ ॥

लब्धे वा विपुले राज्ये राज्येऽपि त्रिदिवौकसां।
किङ्करिष्यति मन्दात्मा यदि नात्मा प्रसीदति ॥ ४४ ॥

पूर्वं जाताः संस्तुता हन्त यान्तो दृश्यन्तेऽमी संविहायैव सर्वं।
अद्य श्वो वा दैववश्याः प्रयामो गेहे देहे: किंकिमन्यैश्च कुर्म्मः ॥४५॥

क्लिष्ट्वा क्लिष्ट्वा क्लेशकर्मादिपाकैः कष्टं कष्टं क्लिष्टकर्माचरन्ति।
दृष्ट्वा दृष्ट्वा लक्ष्यमाणं क्षणेन दृष्टं दृष्टं दृष्टमिच्छन्ति मूढाः ॥४६॥

पीत्वा पीत्वा काममद्यं मदान्धो हित्वा हित्वा शासनं शासकस्य।
भित्त्वा भित्त्वा धर्महेतुं स्वहेतुं हत्वा हत्वा मोहिताः संयतन्ति ॥४७

हायं हायस्वामृतं ज्ञानसिन्धोः पायं पायं द्वेषरागोऽद्य मद्यम्।
गायं गायं ग्रामवार्त्तामपार्थां ध्यायं ध्यायँश्चेन्द्रियार्थान्दुनोति ॥४८॥

ब्रह्मादीनां शान्तया किं समृद्ध्या किं वा हन्त शान्तया योगसिद्ध्या।
तावद्यावच्चामिताज्ञाननिद्रा मुद्रां विद्रा वेति नात्मप्रबोधः ॥४९॥

ह्न्तानन्ता ब्रह्मकल्पव्रतीता ब्रह्माण्डानाञ्चापि पाता व्यतीता।
नेयं क्षुद्राऽज्ञाननिद्राय याता नैवायाता चात्मबोधप्रतीतिः ॥५०॥

भुक्तं सर्व्वं भ्रान्तिरेका न भुक्ता दृष्टं सर्व्वं स्वस्य नैकं स्वरूपम्।
लब्धं सर्वं निर्वृतिर्नैस्थिरैका त्यक्तं सर्वं नान्तरज्ञानमेकम् ॥५१॥

भुक्त्वा भुक्त्वा भूयसी भोगवाञ्छा दृष्ट्वा दृष्ट्वा दर्शनेच्छेति वृद्धिं।
लब्ध्वालब्ध्वालभ्यमन्यत्समीहे ध्यात्वाध्यात्वानिर्वृतिंनाभ्युपैमि ॥५२॥

भ्रान्त्वाभ्रान्त्वानापिकिञ्चित्प्रयामःस्वस्थंस्थास्थंसन्त्यजामोभ्रमेण।
पश्चासिद्धान्साधयन्तः श्रमार्त्तामात्मारामं साधयामः प्रसिद्धम्॥५३॥

मधुव्रतोऽब्रवीत्—भ्रातरेवमेव पश्य—

स्पृहा पिशाची पाशोऽयं चिन्ता वा तत्र राक्षसी।
प्रमादस्तस्करः क्रूरोव्याधयोत्युग्रवृश्चिकाः ॥ ५४ ॥

मृत्युर्व्याघ्रो जरा व्याली रागद्वेषौ च दन्तिनौ।
यस्मिन् संसारकान्तारे—तत्र का निर्भयस्थितिः? ॥ ५५ ॥

असाध्वी धीप्रिया यत्र मनोबन्धुर्दुराशयः।
अवशाश्चेन्द्रियगणास्तत्रवासोविनाशदः ॥ ५६ ॥

यत्र प्रियासुहृद्बन्धुविभवादिवियोगतः।
निरन्तराणि दुःखानि—सुखाशा कैव तत्र ते? ॥ ५७ ॥

गर्भे जन्मनि बाल्येच जरायां मृतुसङ्कटे।
कृच्छ्रे कृच्छ्रान्यसह्यानि—कुत्र गन्तासि निर्वृतिं? ॥ ५८ ॥

धर्म्मादपि समुत्पातोनिपातोऽस्ति च तत्क्षयात्।
उत्पातपातनियते धर्मे—का शर्मधीस्तव? ॥ ५९ ॥

अत्राज्ञानतमस्तोमे पौर्वापर्यमपश्यतां।

समये भ्रमतां भूयो—भीतिः कस्मान्न जायते ? ॥ ६० ॥

व्याधिशोकार्तिमृतानां कतमोवा पलिष्यति।
यशोहं इति सङ्कोचैः सदा यत्र—क्व निर्वृतिः? ॥ ६१ ॥

अधर्मवित्तसञ्चयाद्वियुज्यते महाधनैः।
असद्व्ययः समीहया विनीयते च सज्जनैः ॥ ६२ ॥

कुभोगविन्दुलिप्सया वियुज्यते परामृतैः।
परार्थचिन्तया खतः सुखादसौ वियुज्यते ॥ ६३ ॥

विभिन्नकुम्भतोयवत्सदायुरेति विद्युतिं।
जरेति याति यौवनं कथं न पश्यसि स्फुटम् ? ॥ ६४ ॥

समुत्थितं महाभयं पुरः कथं नबुध्यते।
समुत्थितस्त्वरन् कथं भयादसौ न धावति ? ॥ ६५ ॥

पुरा कृतान्तकिङ्करैर्दृढं निबद्धा नेष्यते।
यमस्य तस्य दर्शनं भयाय कारयिष्यते ॥ ६६ ॥

ततोऽस्य घोरशासनात् प्रशास्य घोरशासनैः।
ततस्तलातलादधः प्रशान्तसङ्कटुर्मिले ॥ ६७ ॥

असह्यवेदनामये तमोमये महाभये।
अपुत्रमित्रबान्धवे चिराय पातयिष्यति ॥ ६८ ॥

क्षुधातृषातिपीड़ितोमुहुर्भटैः प्रताड़ितः।
स्वकर्म संस्मरन् पुरा कृतं मुहुः प्रतप्स्यति ॥ ६९ ॥

ततोपि बहुवर्षयुगकल्पैरनन्तवेदनातोनिर्गतोदुर्गतिमेव भजते, तरुलताकृमिकीटादिषु जायमानोम्रियमाणः कदाचित् मानुषं प्राप्नोतिचेद्बहुतररोगशोकदारिद्र्यादिभिर्दयमानोम्लेच्छपुक्कसादि-

योनिषु भ्रमन् जन्मान्तरेण यदि द्विजातिर्भवति मोक्षाधि-कारी तत्रापि दुःखभागी दुर्दैववशः कामक्रोधलोभमोहमद-मात्सर्य्यादिभिः पुनरपि पापं कुर्वं स्तत्रैव पतति तिष्ठतु नारकी सुरलोकादपि कामी—क्षीणे पुण्ये पतत्येव, तस्मात् क्वापि न निर्वृति—इति पश्यन्नपि न बिभेति जनः अहो मन्दप्रज्ञता! अहो मन्दभाग्यं! येनेदृशीं मन्दां मतिं मुहुर्गमयति, इत्थं श्रुत्वा सुनन्दः प्रत्युवाच——

अविनाशिन्यविश्वस्ता विश्वस्ताः क्षणनाशिनि।
भ्रातः! किमेते विश्वास्या विश्वमायाविमोहिताः?॥ ७०॥

माययोन्मादिताश्चेते सुरयेव सुदुर्बलाः।
प्रबोधिता न बुध्यन्ते निवर्तन्ते न ताड़िताः॥ ७१॥

शृण्वतां निरयान् घोरान् पश्यतां जनदुर्गतीः।
भुञ्जतामपि दुःखानि न भयं जायते नृणाम्॥ ७२॥

श्रुत्वा गर्भकथां व्यथाश्च नरके प्राणप्रयाणे महा-
व्यामोहञ्च विलोक्य तत्तदसुखं भूयोऽनुभूय स्वयम्।
यत्तत्कारणमेव कर्म्म मलिनं कामान् मुहुः सेवते,
तत्सन्मोहमदेन वञ्चितमतिर्लोकः समालोक्यते॥ ७३॥

उन्मादं मदनेन दुर्दमवधा दाहं मदैर्मूढ़तां
शोषं दुर्घटलक्षणया सुदृढ़या लोभादतुष्टिं सदा।
मात्सर्य्येण च मर्म्मकृन्तनरुजं प्राप्ताभिमानाज्जनाः
सेवन्ते हि सुखाशया स्फुटमहो! मोहाभिभूता इमे॥ ७४॥

सच्छिद्रामधिरुह्य देहतरणिं कर्म्मानिलव्याकुलां
कामक्रोधतरङ्गवेगविहतां कालान्तकाक्रान्तताम्।

मोहाम्भोधिजले जराम्रुतिमहाग्राहे निमग्नस्त्रपि।
क्रीड़त्येव हि निर्भयं कथमहो मोहो महानीदृशः! ॥ ७५ ॥

श्रामन्तुाश्वगिरीं स्तरन्ति जलधिं धावन्ति देशान् बहुन्
यस्यार्थं स च न स्थिरोऽस्य विभवो लाभोऽस्य सन्दिह्यते।
अस्त्यन्तः परमार्थ एष परमात्मानन्दपूर्णोऽव्यय-
स्तल्लिप्तौ यतते मनागपि न किं?—हा हन्त मूढ़ो जनः!! ॥ ७६ ॥

मर्त्यं जीवनहेतवेऽथ विषयप्राप्तैर तदाशाहतं
सौख्यार्थं बहुदुःखमज्जनमहो संसेवितुं सोत्सुकः।
श्रीमृत्युञ्जयमात्मकाममखिलाधीशं हृदिस्थं शिवं
पूर्णानन्दमहो न याति शरणं—मोहः कथं दृश्यताम् ॥ ७७ ॥

अन्तः शीतलमन्तिके विजयते भावैकपेयामृतं
स्वच्छन्दं शिवनामधाममहसां निःशेषतृष्णापहं।
वेदैः कीर्त्तितमच्छतीर्थसुगमं हित्वातिमोहाद्रसैः
शून्येऽस्मिन्मरुकाननाभविषये तृष्णातुरो धावति ॥ ७८ ॥

स्वल्पे स्वल्परसे सदा परवशे दुःखोत्तरे भङ्गुरे
सम्मोहे विषयोद्भवे ममतया लोकः स्पृहाव्याकुलः।
आनन्दं परिपूर्णमन्तरहितं स्वात्मानमेकं शिवं
भ्रान्त्या स्वीकुरुते न कोपि किमहो मोहोमहानीदृशः!! ॥ ७९ ॥

आशापाशशतेन बद्धमबलं विद्धं मनोजेषुभि-
स्तृष्णावाततृणीकृतं ज्वलदिव क्रोधाग्निदग्धानलम्।
मूढं मोहमदेन हन्त! रहितं वैराग्यसद्वन्धुना
जीवं जाल्ममनोश्वरं प्रकुरुते शश्वत् क्वबान्तोवशे ॥ ८० ॥

बध्वा गले प्रबलकालविकृष्यमाणाः
कुत्रापि न क्षणमपि स्थितिप्राप्नुवन्तः।
उद्यानभूमिगृहदारजनार्जनोत्काः
खिद्यन्त एव मनुजाः प्रबलो हि मोहः॥ ८१॥

किन्नागैस्तुरगैरगाकृतिमहत्प्राकारसङ्क्षैर्वृतो-
मित्रैश्चित्रकथैः स्मयन्विहरति स्त्रीभिः सुतैः क्रीड़ति।
श्रीमत्तुरञ्जयपादुर्गशरणं नास्य हा छिद्रवित्
हन्तात्यन्तसुदुर्जयोविजयते कालः करालोरिपुः॥ ८२॥

किं दारबन्धुविभवेन सुसंभृतेन किम्भोगपुष्टतमपुष्टकलेवरेण।
किं सञ्चितैर्गुणगणैरगिवैर्यदेष कालोऽखिलं खलु हरिष्यति नाति-
कालात्॥ ८३॥

आर्य्ये! पश्य—भुक्ताः स्त्रियोऽनुकूलाश्च भुक्ता भूर्विजयश्रिया।
भुक्ताः स्तुतिसरस्वत्योर्नाद्याप्येति कृतार्थता॥ ८४॥

निहताः शत्रवः शश्वत् क्षुत्पिपाशामयोपमाः।
पुनरेते समायान्ति किं कृत्वास्तु कृतार्थता॥ ८५॥

पुनः प्रातः पुनः स्नानं पुनर्ग्रासः पुनर्निशा।
पुनर्निद्राजागरणे—कदाचिरसुखस्थितिः?॥ ८६॥

दृष्टमेव हि पश्यामोभुञ्ज्महे भुक्तमेव हि।
लभामहे लब्धमेव नापूर्वं किञ्चिदाप्नुमः॥ ८७॥

वयं प्रमत्ताः स्वपामोऽप्रमत्तः कालतस्करः।
न रक्षायां हतोदैवः सर्वदृक् किं भविष्यति?॥ ८८॥

तस्मात्समुत्तारयितारमस्मान्महाभयापारगभीरसिन्धोः।
कं ज्ञानविज्ञानगुरुं गुरुं द्रागासादयामोऽद्य दयासहायम्॥८९

अप्यक्षिपादादिसुसाधनानां न कर्मवैतारष्ठते गतिः स्यात्।
तस्माद् वयं मुमुक्षुतदृष्टतत्त्वमन्वेषयामो गुरुमात्मसिद्ध्यै॥ ८० ॥

अस्मिन् संतारकाः प्रतारकाश्च बहवः सन्ति, तद्विद्यावृत्त्यनुभवप्रसादात् परीक्ष्य समाश्रयणीयाः प्रशान्तरपि वितरणभवसिन्धुं तारयन्त्येके, आशावागभिर्बहुधा खला इवोच्चैः प्रतारयन्त्यन्ये, अपिसन्तरणसमर्था भवसिन्धौ सन्निमज्जन्ति, विषयेण संप्रमत्ता उन्मत्ता इव सुगाढ़मदेन यस्तरति स तारयति च, योमज्जति मज्जयत्येव स्वानुगतान्—भवसिन्धौ नौरिव सुदृढ़ा स्वसाधनेर्हीना श्रुतयश्चास्तानशुभवरद्धितान् अश्मान् न यातु संयामः, खनिषे न मणिपरिचाभिचायैयान्ति धीमन्तः, अज्ञः शास्त्रं चुम्बन् न तद् रसं तावदनुभवति, अधररसं दयिताया विट इव दंशे न जानाति—एवं विचारयन्तौ तौ तत्तपोवने विचेरतुः॥

तस्मिन्वने दैववशेन देव्यां सञ्जातकामादुपजातभीतिः।
कपोतनामा मुनिरात्मसिद्ध्यै तपश्चचारात्मविनिग्रहेण॥ ८१।

तं तावुपेत्य पणिपत्य भूयः, पप्रच्छतुः स्वच्छहृदा स्फुरन्तं।
सदा मुदात्ममननैकशीलं, मुनिं मुनी वायनिनाथपुत्रौ॥ ८२॥

तावूचतुः—

प्रमादजाज्ञानजहीनशक्तिजान्यभिच्छतास्वापि भवन्त्यघान्यलं।
अवशता वा न च सावधानता न शक्तिमत्तापि जनेऽस्ति तादृशी॥

अत्यल्पपापे चिरदृष्टदर्शनाद्याताम्बतिक्रूरइवावभाति।
दुष्कर्मणां हा गहनोविपाकोमोक्षःसू परं ज्ञतया दुरापः॥ ८३॥

अवाप्य तैस्तैश्च तपःक्रियाश्रमैश्चिराद्दिवं संपततीह भूयः।
इत्यादिसंचिन्त्य वयं विचेतसोभयेन मोहेन विनष्टसत्वाः ॥९४॥

[ एकान्ततोऽत्यन्ततया च दुःखहानावुपायं परिमार्गयामः ]
जनिमरणजराविय़ोगरोगैर्निरयगणैरतिदुर्गमे गभीरे।
अविदितपरपारभीमे भवजलधौ पतिताः निमज्जयामः ॥९५॥

तदिह भयवशादतीव दीनस्तव चरणद्वयमाश्रितोऽस्मि भक्त्या।
शरणमनुगतं प्रशाधि शिष्यं कुरु कृपयैव भयाम्बुराशिपारं॥९६॥

उवाच तौ तत्सुमतिप्रसादितौ ह्रदोदितोदारदयोमहर्षिः।
विषीदतां मानविषादयोग्यौ भीतौ भयेभ्योविषयान् जिहासू॥९७॥

करोति पापं विषयाशया हि न तज्जिहासुः कुरुते निषिद्धं।
करोति चेद्दैवबलात् प्रमादादज्ञानतोनास्य तथापराधाः ॥ ९८ ॥

पश्चात्तापात्सदि ख्यापनाच्च त्यागाज्जाप्याद्दानतश्चोपवासात्।
तीर्थस्नानावासयात्राभ्रचिन्तायोगाद्योगाद्वा प्रयात्यन्तमहः ॥९९॥

संख्यावतां दुष्करा देहभाजां प्रायश्चितं दुष्करं तेन मन्ये।
तस्माद्ध्यानभक्तौ विहाय प्रायश्चित्तं नाश्वसां सम्यगस्ति ॥१००॥

पापारम्भीनानुतापौ प्रहृष्टः पापं कृत्वा निष्कृतिं नार्हतीह।
भुक्त्वा कृच्छ्रं हन्त! जन्मान्तरेऽपि कृत्वा पापं तापमेष प्रयाति॥१०१॥

प्रायश्चित्तमकामात् कृते निषिद्धे सकामतोपीशके निगदन्त्यनुतापादानु नतु पापेभ्योनिवृत्तशीलस्य, यदुक्तं — 'धाता अल्पपापे अतिदण्डं विदधाति'—इति, तत्र;

विचार्य्य कालं हृदयं च शक्तिं नृपस्तदंशोपि तनोति दण्डं।
अज्ञः स सर्व्वज्ञतमोन किं स्यात्? विचारविज्ञोविधिरीश्वरात्मा ॥

शिवनुग्रहश्चैव विशुद्धसत्वात्सर्व्वंमतां सर्वदयाश्रयत्वात्।
समुद्धरत्येव जगत् क्रमेण क्रीड़न् स्वयज्ञारात्मविनोदमूर्त्त्या॥१०३॥

शिवाङ्घ्रिवाह्निन्यशुभा न याति गतिं मतिस्तन्मतिमांस्तथैव।
प्राचीं व्रजन् किं व्रजति प्रतीचीं तस्माद्भवे त्वात! शिवाङ्घ्रिपाथः॥१०४॥

यन्नामकीर्त्तनमपि प्रथितान्तरायं पापं महत्तदपि हन्त्यमितायमानं।
शान्तिम्प्रयच्छति तदैव तदाश्रितस्य किं दुर्गतिर्विषयसङ्गपराङ्-
मुखस्य॥ १०५॥

सकृत्प्रपन्नाय भवार्त्तिभीरवे तवाहमितीरव च साधुवादिने।
असम्प्रदायेष्टफलं सुनिश्चलं निवर्त्तते नेशकृपा सुनिश्चला॥ १०६

तस्माद्विदन्! तद्विहितं हितं चरन् यतस्व संसारभयापनुत्तये।
मतिं सतां सङ्गमजां शितानां प्रयत्नभाजां किमिहास्ति दुर्लभं॥१०७

परमीशपदं प्रयात्यहो!! मतिमाँस्त्यागबलेन दुर्लभं, विमति-
र्बहुसङ्गहेय हानिरयं शश्वदवाप्य मुह्यति॥

कुमारावूचतुः—

हिताहितं चैकपदेन संदिश श्रेयश्च देयश्च परं प्रहेयं।
कार्य्यं तथाकार्य्यमथोनिवार्य्यं धार्य्यं तथाधार्य्यमथावधार्य्यं॥१०८॥

शास्त्रं गुरुं कीदृशमाश्रयेद्वा? सेव्यश्च किं दैवतमात्मसिद्धैा?।
अन्वेषितव्यश्च किमेकमन्तर्नान्वेषितव्यश्च भयाभये च?॥ १०९॥

मुनिस्तावववादीत्—

हिताय चैकोविहितोविधाता धर्म्मोऽत्र निश्शेषपुमर्थहेतुः।
स एक एवात्र हितोजनानां संरचितोऽरचणतोहितः स्यात्॥११०॥

साम्यं ध्यायेदेष धर्मोहि मुख्योवर्णाद्याश्रमस्यापि धर्मोद्वितीयः।
इष्टापूर्त्तेश्चापि धर्मस्तृतीयस्तस्माद्बौद्धर्भक्तिधर्मस्तु सिद्धैा॥१११॥

वर्णाश्रयोक्तं चर धर्म्ममेनं सदा सदाचार-परो भवांश्च्चैः।
सदा विगीते चरिते हि तेषां धर्म्मो दुरूहोऽपि समूहनीयः॥११२॥
स सर्व-सन्धारणतो हि धर्म्मः सर्वस्य शास्ता परमेश्वरात्मा।
धर्म्मो न चेडारयतीह लोकं भवे दमर्थ्याद मिदं समस्तम् ॥११३॥
धर्म्मार्थ मर्थं ह्वणुयाच्च कामं राग-क्षयायैव न भोग-हेतोः।
धर्म्मस्तदाज्ञा-परिपालनार्थं चरेद्धिशुद्धं न च काम-हेतोः ॥११४
ज्ञेयं परं बन्ध-विमोक्ष-तत्त्वं सदा जनाना मभयं प्रदेयम्।
अज्ञानमन्तः सुविचार्य्य ह्येयं ध्येयं सदान्तः परमात्म-तत्वम्॥११५॥
कार्य्यं सदार्य्याचरितं विशुद्धं कदाप्यनार्य्याचरितं न कार्य्यम्।
धार्य्यं गुरोर्वाक्य मधार्य्यमन्तः परापवादादि-कुतर्कितञ्च ॥११६॥
सदा निवार्य्याः करणादयो हि सद्भावधार्य्यं परमार्थ-शास्त्रम्।
यच्छ्रेयसे शास्ति तदेव शास्त्रं श्रेयो हि मोक्षान्न परं प्रतीमः॥११७
धर्म्मार्थकामान् पुरुषाः पुमर्थांश्मोक्षञ्च तत् तत्व-विदोऽन्त्यमेव।
वदन्ति पूर्वेषु विलोक्य शश्वदुत्पात-पातादि-भयञ्च दुःखम् ॥११८॥
वैद्यो गदाना मिव मूलहन्ता गुरुर्निषेव्यो भव-मूल-हन्ता।
अपथ्य-भोगो कुधियादिशन्तावनर्थरूपौ खलु तौ मतौ नः ॥११९॥
अरेर्जयो नैव न भोगसम्पन्न वाऽणिमाद्याः खलु सिद्धिसंज्ञाः।
तामेव सिद्धिं सुधियः स्मरन्ति यया सुसिद्धेऽहृदये परात्मा ॥१२०॥
गुरुः स एकः स सुहृच्च शास्त्रं तत् सा मतिस्तद्धृदयं विशुद्धम्।
यच्चाश्रयं शोक-विमोह-हीनं शिवं परं प्रापयति स्वरूपम् ॥१२१॥

अध्यापकाद्दशगुणो हि पिता पितुश्च-
माता ततो गुरुतरो गुरुरेव साक्षात्।

वपुषि सं प्रभवन्ति चैते
वेदान्त-दवत-तरवय एतएव ॥ १२२ ॥

एषां विनानुमतितो मतितोऽपि दत्तो
नैव त्रिवर्ग-वरणाय भवेत् स्वतन्त्रः ।
एते त्रिवर्ग-फलदा स्त्रिदिव-प्रदाश्च
संसेविता गुरुरमोक्षपवर्गदोऽपि ॥ १२३ ॥

माता पिता सुहृदथेश्वर एष देवः
शास्ता प्रशस्त-सुख-हेतुरभीष्ट-दाता ।
पाता हरश्च विपदा मपदं भयानां
साक्षाच्छिवो गुरु रसौ धृत मर्त्य देहः ॥ १२४ ॥

निन्दां गुरो रथ निशम्य श्रुतं निहन्या-
च्छक्तान्वितो यदि न चेच्छ्रवणे पिधाय ।
यो नान्यतो व्रजति तं प्रशमीक्ष्य नेत्रे
संमीलये दथ रविं प्रसमीक्ष्य शुध्येत् ॥ १२५ ॥

आधि-व्याधि-निदान-देह-जनकस्तात स्तथैव प्रसूः,
भोगांश्चापहर्त्तु मेव हि सुहृद्रूपाः खला बान्धवाः ।
चेतः-स्वास्थ्य-हरी कलाभि रबला सर्वस्व-हारी सुतः,
स्यादेकः परमार्थ-बन्धु रनघः श्रीमान् गुरुर्मोक्षदः ॥१२६॥

एको हि देवः क्रियया सभक्त्या प्रेमार्द्रया ज्ञान-बलेन सेव्यः ।
यतः समस्तं खलु यत् समस्तं यमेव विज्ञाय विमुच्यते हि ॥१२७॥

अन्वेषितव्यं त्वभयं पदं तत् तस्मादृते नास्ति गवेषितव्यम् ।
मोक्षादृते नास्त्यभयं कदापि कामादृते नास्ति भयं जनानाम् ॥१२८

सत्सङ्गतोऽसङ्गपदन्तमेहि न कामि-सङ्गी मनसापि कार्य्यः।
सङ्गो हि कामाय स काम एकोऽनर्थाय मोक्षार्थहरोऽतिशत्रुः॥१२८

कामादयोऽमी हृदयाधिवासाः सर्वस्व-नाशाय भवन्ति नान्ये।
दुर्गाणि सन्त्यन्य-रिपु-प्रबाधा शमेन न चैषां दिवि भूतलादौ॥१३०॥

कामादि-शत्रून् करणैः समेतं जित्वा जयी स्यान्न विजित्य शत्रून्।
बाधन्त एते खलु निर्जितारीन् जितेषु चैतेषु न शत्रु-बाधा॥१३१॥

कामादयः सन्ति च सन्तु देह-धर्म्मा इमे नैभिरकार्य्यमल्पम्।
कुर्वन् जनो याति गतिं यतीनां जितेन्द्रियोऽसौ विजितेन्द्रियाणाम्॥२

भोगांश्च कीर्तिं त्रिदिवाधिवासं कामादकामान्मनसो विशुद्धिम्।
मोक्षाय कर्म्मैव ददात्यकर्म्म विकर्म्मणो रोग-भयादि-कष्टम्॥१२३॥

कामाय कामाय भवेद्विमुक्त्यै भवेद्विमुक्त्यै विहितं हि कर्म्म।
कष्टाय कष्टाय तथैव कृत्स्नं कृतं फलं यच्छति नान्यथा स्यात्॥३४

तस्मात् स्वकर्मात्र भजेति चोक्तो पुनः कुमारौ मुनिमूचतुस्ताम्।
वर्णाश्रमाचार-विधिं वदेति ततः प्रहृष्टो मुनिराह भूयः॥१३५॥

वर्णाश्चत्वार इह प्रसिद्धा स्तद्वर्ण-साङ्कर्य्य-भवाः परे च।
म्लेच्छाः पुनर्धर्म्म-बहिष्कृता ये व्रात्या असंस्कार-गणाद्भवन्ति॥१३६

चत्वार एवाश्रम-नामधेया ज्येष्ठे क्रमात्क्रमतोऽप्यरागात्।
द्वयोस्त्रय आद्य चतुर्थ एको गृहाधिवासो विपिने निदेशात्॥१३७॥

भर्तुर्वनेऽप्यग्रज-सेवयत्र सिद्धि न चान्यो विधिरस्ति तेषु।
स्याद्ब्रह्मचारी गुरु वास-निष्ठो गृहाभिलाषी द्विविधो द्वितीयः॥३८

पत्न्या द्वितीयोऽष्टपङ्क्तितोऽन्या तुरीयो वसेदाटति वा द्वितीयः।
पत्न्या व्रजेद्वा विपिनं तपस्वी हित्वा व्रजेत्ता गयत्रा यतिस्तु॥१३९

कुटीचको वाथ बहूदको वा हंसो भवेद्वा परमादि-हंसः।
पूर्वो जपाग्निव्रतिसंस्कृतः सन् मैत्रोऽथ जैत्रो जन-पालनेन॥१४०॥
चत्रोऽपरो धर्म्म-धनार्जनेन शूद्रादि रेषां परिचर्य्ययैव।
त्रयस्त्रिकर्म्माण इमे हि कर्म्मैव कर्म्मकृच्छ्रौत-विधानतः स्यात्॥४१
त्रि-वृत्ति रार्य्योऽथ षडंश-वृत्ति र्भवेज्जनानां परिपालकोऽपि।
कृषिं कुसीदं पशुमेव जीवेद्वैश्योऽवशेष-प्रभु-शेष-वृत्तिः ॥ १४२ ॥
शिलादि-शुश्र्योत्तमयैव जीवेत्प्रतिग्रहं नातिधनाय कुर्य्यात्।
शक्तोऽपि-विद्या-तपसेतरस्तु दात्रा समं नश्यति हन्त! विप्रः॥१४३
द्वितीयतात्तीयिकतात्र्च जीवे दाद्यो विपद्यन्त रजः प्रजाभ्यः।
भवेच्चतुर्थांश-हरोऽपि सर्वे गृह्णन्ति नश्यत्सु जनेषु शस्त्रम् ॥१४४॥
वाणिज्य-शिल्पादिभि रप्यजीवन् जीवेन्न मद्यामिष-चर्म्म-लाहैः।
रङ्गावतारी न च रूप-जीवी भवेदपूर्वो विपदि त्रिपूर्वः ॥१४५॥
पतेद्द्विज-स्त्री-गमनाद् विवर्ण-सिद्धान्न-कन्या-ग्रहणेन शूद्रः।
श्रुति-श्रवोच्चारणतो द्विजाना मवज्ञया कापिल-दुग्ध-पानात्॥४६
त्रिधि र्न येषां विहितो विधात्रा स्वाध्याय-यज्ञादिषु नो निषेधः।
श्राद्धादि-यज्ञेष्वथ पौष्टिके च निर्मन्त्रके संविहिते पुराणैः ॥१४७॥
ब्रह्मविद्या ब्राह्मणानां न चान्यो वित्तविद्या धर्म्मतश्चोरुजानाम्।
स्त्री-शूद्राणां पति-देवैव नान्यो राज्ञां धर्म्मः सर्व-धर्म्माद्यविद्या॥१४८
विद्यार्थी स्यान्नित्य माचार्य्य-सेवी गेहस्थः स्यात्संविभाग्यातिथेयः।
एवं वन्यै स्तापसः स्यात्सवन्यै रात्मा ह्येको ध्यान-सेव्यो यतीनाम्॥५८
गेहस्थोवारण्यको ब्रह्मचारी स्वं स्वं धर्म्मं संश्रितो भिक्षुवद्यः।
मोक्षाकाङ्क्षी ह्याचरन् ध्यान-यज्ञं मोक्षं गच्छेत् काम्य-धर्म्मान्निवृत्तः॥

द्रव्येप्सूना मर्थदो द्रव्य-यागो नास्ति द्रव्ये कश्चिदर्थो मुमुक्षोः ।
नित्य-ज्ञान-ध्यान-शान्त्यादि-यज्ञै र्यज्ञैरिष्ट्वा ते गतिं सम्प्रयान्ति ॥१५१

नैवास्त्यन्य-ज्ञान-योगात्पवित्रं पापादिभ्यः पावनं वा जनानाम् ।
मोक्षे साक्षात्साधनं नान्यदस्मात्तस्मात् ज्ञानं सर्वदा सर्व-सेव्यम्॥१५२

श्रद्धा भक्ति र्ज्ञान मित्यत्नमस्ति ज्ञानं योगः स्थापणं सत्तपश्च ।
ज्ञानी भूयो नो पतेत् क्लेश-मध्ये चक्षुष्मन्तो नैव कूपे पतन्ति॥१५३॥

दृष्ट्वाऽऽदत्ते निधि मस्मिन् सचक्षु र्यद्वत् तद्वत् ज्ञान-चक्षुर्विलोक्य ।
शुद्धात्मानं निधि मादत्तएव यं लब्ध्वान्यन्नैव लब्धव्य मस्ति ॥१५४॥

वेदै र्बोध्या ब्राह्मणाः सन्निवृत्ता अन्येऽपि स्युस्तारतम्या द्विजाद्याः।
शूद्रं स्मृत्या बोधयेद्भाषयान्यान् ते मुच्येरन्विक्रमाद्वा क्रमाद्वा ॥१५५

जेष्ठाज् ज्ञानं प्राप्नुयात् ज्ञान-निष्ठा द्वेदान्तोक्तं ब्राह्मणाद्ब्रह्म शिक्षेत् ।
ज्ञानजेष्ठान्म्लेच्छतोऽप्यात्मलाभः किं शितघ्नो न श्मशानस्थितोऽग्निः॥

अविक्रियं निष्क्रिय मात्मतत्त्वं विदन् कथं विन्दतु कर्मसङ्गम् ।
सकर्म्मणो जन्म-सुखासुखे च मुक्तास्ततस्तत्त्व-विदः स्वभावात्॥१५७

मोक्षो हि यज्ञादिभि रप्यवाप्यः परम्परा ज्ञान-बलेन साक्षात् ।
तज् ज्ञान मेकं सदुपाय-जातै रवाप्यते सद्गुरु-सेवनेन ॥ १५८ ॥

प्रहीन-कामोह्यलसः क्रियासु तथाह्यधर्म्मात्म-रतोऽल्पवित्तः ।
अकार्य्य-कर्त्तास्तरनर्थ-लोलुपो विमूढवन्मूढ-चरो हि विद्वान्॥१५९॥

प्रणाम-संप्रश्न-निसेवनाद्यै स्तं शुद्ध-बुद्धैव चिरम्प्रसाद्य ।
ज्ञातव्य मेतत् स-रहस्य मात्म-ज्ञानं स-विज्ञान मपास्त-दोषैः ॥१६०

वदन्ति धर्म्मं बहु-शास्त्र मन्ये नाना फलं चैक-फलन्तु शुद्धाः ।
शुद्धं स्वधर्म्मं परमेश्वरार्पण-क्रिया-परा नित्य मिहाचरन्ति ॥१६१॥

सर्व्वेषामेव स्वकुलागत-सदाचार-पालन-गुरु-परिजनानुगत-दीनादि-संविभाग-सत्य-शौच-सदाचार-सन्तोष-तितिक्षा-ऽतिथि-पूजन-श्राद्धकर्म्म-ब्रह्मचर्य्या-ऽहिंसाऽनसूयाऽक्रोधाऽप्रमादाऽनृशंस्य-सत्तीर्थानुसरण-सर्व्वेन्द्रिय-निग्रह-सर्व्वभूतदया-न्यायार्जितदान-देव-ब्राह्मणनृपादिसाधुसम्मान-सत्संगजनितविवेक आत्मज्ञाननिष्ठा-योगाभ्यास-विषयानभ्यास-सततान्तरन्तराय-चालन-परमाभिमत-प्राप्ति-कारण-परमेश्वर-कीर्त्ति-कीर्त्तन-श्रवण-स्मरण-सेवन-दास्य-वन्दन-यथासम्भवार्च्चन-सख्य-स्वार्पणादि-रूपो भक्ति-योगो भवति परमेश्वरे सर्व्वज्ञे सर्व्वशक्तिमति परमात्मनि परम-श्रेयसीति ॥

सर्व्वैरेव स चाराध्यः स्व-स्व-कर्म्म-समर्पणैः ।
प्रायश्चित्तैरपि यथा शक्त्या पातित्य-दूषितैः ॥१६२॥

ये ये धर्म्माः पापिनां पाप-शुद्ध्यै ते ते सद्भिर्लङ्घनीया न जातु ।
एतेनैवाराध्यते कर्म्मणेशस्तस्यादेशं पालयेद्धि स्व-शक्त्या ॥१६३॥

जातं पापं परिषदि वदेत्तन्निदेशाद्विशुद्ध्यै-
च्छुद्धे श्रद्धा प्रसरति मतिस्तद्गति स्वेतरे तु ।
पापाबुद्धिर्गतिरपि तथा पापतस्तेन शुद्धिं
कुर्य्याद्यत्नैर्हृदयवपुषोस्तत्र नोदासितव्यम् ॥ १६४ ॥

धर्म्मार्थं भवति यदुद्यतः स्वशक्त्या दैवाच्चेन्न स घटते तथापि तस्य ।
तद्धर्म्मो भवति हि तेन यत्नवान् स्याद्धर्म्मार्थे न पुनरघाय चेतसि ॥१६५

नो वर्णाश्रमविहितेतरोत्तरो भूयाच्छ्रेयोर्थी न खलु विनाश्रमेण भूयात्
ब्रह्मण्याच्युतविहिताश्रमश्च भूयात् नो जात्याश्रमविमुखस्य दुष्यतीशः ॥

सर्व्वारम्भादोषसम्भाविता हि ते संन्यासगाः सिद्धासिद्धा च भूयः ।

तस्मात् सद्भिः श्रविगीतामहत्या यत्तोजीवे श्राप्यसिद्दानुतप्येत॥१६७

आर्त्तानां हृतमतिभीतिककक्षुधार्त्तै-
र्नित्यं स्यादवनपरो दयाभिकर्त्तैः।
आर्तिघ्नो भवति कदापि नार्तिशुक्तः
प्राणैः स्वैरपि शरणार्थिनो हि पायात्॥ १६८॥

गौर्गङ्गागिरितनयारमागुरूणां ब्रह्मेशाच्युतम... ...रात्मनश्च।
बुद्ध्... नियत मभेदभावशुद्धो हृद्वेदं व्रजति हृदात्र भेदभावैः॥
आरब्धं न हि परिहरेत्सुरादिभक्तिं नित्यत्वात्तदकरणेन पातकी स्यात्
यो देवं स्वमिह विहाय चान्यदे... मूढत्वादति यजते च्युतो द्वयोः स्यात्॥

पाखण्डादपि च शुभागमाविकत्वं
गृह्णीयान्निगणवदमेध्य-मध्यतोपि।
नाददाकृतिनिलयाभिवारमुख्यान्
चोराध्येरहह हलाहलमेव विद्वान्॥ १७१॥

मौन्यन्तःकरणजयी स्वभावशुद्धः
सौम्यः स्यात्सततमनः प्रसादयुक्तः।
स्वाध्यायप्रियहितसत्यवाक् च भूया
न्नोद्वेगप्रदमपरस्य तात! वाग्यम्॥ १७२॥

एतत्ते हृदयवचः कृतन्तपःस्या
च्छारीरं द्विजगुरुदेवधीमदर्चा।
शौचञ्चार्जवमविहिंसनं जनाना
मुत्पीडं तपइह नात्मनो परस्य॥१७३॥

निर्व्याजं द्विजगुरुदेवतातिथीनां
सेवी स्यात स्वविभवतस्तदात्मशुद्ध्या।

स्वे भोगेऽपि च यदृच्छयोपलब्धे
रात्मानं तमथ यजेत्स एक आत्मा ॥ १७४ ॥

भावं कुर्य्यात् सर्व्वभूतेषु साम्यं पूजां कुर्य्यात्तारतम्या द्विधानैः।
आज्ञां धातुः पालयन् पालयंश्च साम्यं साम्यं सोम्य ! योगं स्मरन्ति॥
सत्त्वस्थोव्रजति दिवं नरो रजस्थस्तिर्य्यक्त्वं तमसि मृतस्तथा चलत्वम्।
त्रिष्वामासुखपरिमोहयोनयोऽमो तद्भूयात् सततविशुद्धसत्त्वसंस्थः॥

एतेषां गतिमवलोकयन्नुदासो
निःसङ्गो भवति यति गुणैरतीतः।
निष्पन्दो व्यपगतहर्षदुःखमोहो
नैष्कर्म्यां व्रजति गतिं भवेन्न भूयः॥ १७७ ॥

नित्यं चित्तं वासयेत्तत्स्वभावैः
श्रद्धाभक्ति-ज्ञानयोगांश्च युञ्ज्यात्।
निसङ्गः स्यात् सर्वदा कर्तृभावैः
कृत्यश्चैतत् कृत्यमन्यद्वयाय॥ १७८ ॥

यच्चित्तः स्यात्पुरुष स्तन्मयःस्या
द्दृश्यं चैतत् तेन भूयात् सुचित्त.।
यो यच्छ्रद्ध स्तन्मयश्चापि भूयात्
श्रद्धातव्यं तेन सच्छास्त्रदृष्ट्या॥ १७९ ॥

वाचो दद्याच्चक्षुषो चापि दद्यात्
श्रोत्रे दद्यान्मानसञ्चापि दद्यात्।
आप्ये रूपे कीर्तने तत्स्वरूपे
दुःसंस्कारस्यावकाशं न दद्यात्॥ १८० ॥

मूढ़ावेशैः संशयानैः कुतर्कैः
सम्पर्कों स्यान्न क्षणं भावदुष्टैः।
अस्पृश्यः स्यात् सर्व्वमालालुरायाः
खीकृतशास्याः प्रपतेच्छिन्दुमात्रम्॥ १८२ ॥
दुर्गन्धिः स्याद्वस्तुदुर्गन्धयोगा-
दल्पेनाल्पं भूयसा तस्यत्वम्।
सद्गन्धस्याप्येवमेवेति मत्वा
सत्सङ्गी स्यान्नैव दुःसङ्गदुष्टः॥ १८३ ॥
ज्ञात्वा ज्ञात्वा वाग्भि रुक्तै गुरूणाम्
भुक्त्वा भुक्त्वा कालकूटं कुभोगम्।
भूयो भूयो ये प्रवृत्ताः स्वनाशे
किन्ते सङ्गात्रापरात्राशयन्तु॥ १८४ ॥
हेयादेयत्वेन वा यस्य सर्व्वम्
यस्मात् प्रेशास्त्रापरः सूक्ष्ममन्तः।
छित्वा येऽस्मिन् साधयन्तीन्द्रियार्थान्
सुप्राभां स्ते किं प्रमाणं ह्यसन्तः॥ १८५ ॥

यज्ञं दानञ्च तपोऽनशनं यद् वेद-संविहितम्।
तद्द्व्यमनियमावपि वर्ज्यं साधारणं मुमुक्षूणाम्॥१८६॥
न द्रव्ययज्ञयमिनां पुंशस्तो द्रव्यादि-सम्पत्ति-बलं यदि स्यात्।
यजेद् विशुद्धं विधिवद् विशुद्धैर्हिंसोन च स्यात्पशुवत्पशूनाम्॥१८७॥
पात्राय सर्व्वस्व मपि प्रदद्याद्दद्यादपात्राय कपर्द्दिकां न।
पात्रे नदत्वाऽन्यतरे च दत्वा कृच्छ्रीभवेत् दुःकर एष धर्म्मः॥१८८॥
पात्रं दरिद्रोऽथ कुटुम्बशाली विद्वान् सुहृत्तोऽपतितश्च सद्गयी।
दद्यादमुष्मै विधिवद्दयाभिर्दीनाय दैन्योद्धरणार्थमेव॥ १८९॥

दत्तं यत्र परेभ्यस्तत्तु परेभ्यः प्रदत्तमेव जानीहि।
भुक्तं यत्र स सन्निभुक्तं दुःखं वदर्जनैः पूर्वम्॥ १९०॥
भुक्ताना मर्थानां फलमत्रैव च्चयस्तदुत्थ सुखभोगैः।
दत्तानां सत्पात्रे परत्र सुखफल मनन्तगुणलाभैः॥ १९१॥
संगृह्यासाधुभ्यः साधुभ्यो यः प्रयच्छतीहार्थम्।
धर्मार्थं कृत्स्नमसौ वेदोवैर्दसम्मतम्॥ १९२॥
धर्मायाथाऽधर्महेतोश्च साधुप्रीत्यप्रीत्योः कीर्त्यकीर्त्योस्तथैव।
अर्थार्थायानर्थहेतोश्च विप्रेद्देयं देयं देयमेवाभयाय॥१९३॥
स्वर्ग्यं विधिवद्दत्तं धर्म्यं। धर्म्याद् विभागतो दत्तम्।
अर्थाय तदर्थफलं युक्तं धर्म्यं दयामात्रात्॥ १९४॥
धनत्यजायाऽधनसत्त्वखाय प्राणानपि स्वान् त्यज सत्सुखाय।
सर्वेन्द्रियै रेव सहेन्द्रियार्थै रक्षान मेकं त्यज सत्सुखाय॥१९५॥
हितम्मितं पूततमं समश्नन्नायकः स्यान्म्रियते ह्यनश्नन्॥१९६॥
स्याद्ब्रह्मचारी ललनाविवर्ज्जनात् सर्वात्मनार्त्तौ तु गृही स्त्रियं स्वाम्।
गच्छन्नदुष्येद्धृदि लुप्तकामोऽगच्छंश्च दुष्येदिति सं स्मरन्ति॥१९७॥
द्वेषादभीष्टप्रमदाभिलाषात् पर्वप्रवासव्रतरोगहीनः।
प्रतीक्ष्य बन्ध्यार्त्तववर्ज्जनेन ऋत्वार्द्धतः गृह्णाति ऋतुकारी॥१९८॥
कायेन वाचा मनसा धिया स्त्रियां हित्वा रतिं ब्रह्मगतिं प्रयाति।
दैवीं गतिं याति मतिच्युतश्चेद्धि जन्मजन्मायगमुपस्थ निग्रहात्।१९९
सत्यं वदेत्साधु परीक्ष्य दृष्टश्रुतानुमानादिभिरेव तज्ज्ञः।
मिथ्यां वदेत् क्वापि सतां हिताय सतां हितं तथ्यमिति स्मरन्ति॥२००
प्राणात्यये यस्य वाचा परेषा मेवं सर्वस्वापचयापात्।
स्त्रीसम्प्रयुक्ते नर्मयोगे विवाहे मिथ्यापि स्यात्सत्यमित्युक्तमस्ति॥२०१
स्तेयं न कुर्य्यात् किमपीह तद्वत् प्रतिग्रही स्यान्न धनस्य लोभात्।

गुरोः कृते प्राणपरीक्षये वा तावत् प्रगल्भाव न दुष्यतस्तौ ॥२०२॥
हिंसां जह्याद्धिंसको हिंसितः स्यात् तुष्टिं दद्यात् तुष्टिदस्तुष्टिमेति।
सन्तुष्टः स्यादात्मनीवात्मतृष्णा तुष्टेरन्यं न परं साध्यमस्ति ॥२०३॥
शौचं कुर्य्याद्बाह्यमन्तः सदैव बाह्यादन्तर्जायते भावशुद्धिः।
शुद्धं भावं भावशुद्ध्यैव पश्येत् शुद्धादर्शे वस्तुवच्छुद्धदृष्टिः ॥२०४॥
शुद्धा सिद्धेर्वासनैका दृढ़ा चेत् कामक्रोधक्षोभमालिन्यपुञ्जात्।
निष्कामस्यात्मत्यतोऽक्षमाद्यैः सैका बुद्धेः शुद्धिमेवातनोति॥२०५॥
कृत्वा शुद्धः कृच्छ्रचान्द्रायणादीन् प्राणायामानाचरेद्वा तपस्वी।
चित्तैकाग्र्यं योगिनां स्यात्तपोऽग्र्यं तच्चाव्यग्रेणाचरेदात्मसेन ॥२०६॥
यदात्मसम्बोधकृते क्षमं स्याद्यदीश्वराराधनकृच्च नित्यम्।
तदभ्यसेदध्ययनन्ननीतिकुतर्कशृङ्गारविहारचिन्तम् ॥ २०७॥
यमनियमेष्वपि योगी त्रितयं वश्यं प्रयत्नतः कुर्य्यात्।
स्त्रीपरिहरणमहिंसनमीशे सर्वार्पणं भक्त्या ॥ २०८ ॥
न स्त्रीकटाक्षविक्षेपाद्विक्षेपोऽन्यो यतेर्धनः।
तस्मात् सर्वात्मना दूरे निक्षिपेद्वामवीक्षणाम् ॥ २०९ ॥
दुःखदो दुःखमाप्नोति दुःखाद्विक्षेप एव हि।
तस्मात् सर्वात्मना दुःखं न दद्यात् कस्यचित् क्वचित् ॥ २१० ॥
योगे वृद्धिं साधनसम्वृद्धिमन्तःशुद्धिञ्च।
विघ्नविनाशं स्वात्मप्रकाशमेका ददाति शिवभक्तिः ॥ २११ ॥
तस्मादीशप्रधानस्य कुर्य्यात्तद्विघ्नानां चयक्षितिविदञ्च।
भक्त्या तत्राखिलकर्म्मार्पणेन सिद्धेर्द्व्यैर्नियमैः किं यमैर्वा ॥२१२॥

कुमारावूचतुः।

ज्ञानं योगो भक्तिरेषा मालम्बनं फलञ्च नौ ब्रूहि।
इति भूपतिपुत्राभ्यां मुक्तस्तां वृक्तवान् स मुनिः ॥ २१३ ॥

ज्ञानं विवेकलब्धं तत्त्वेभ्यः पञ्चविंशस्य ।
षड्विंशकेन चैक्यज्ञानं ज्ञानं भवेत्तस्य ॥ २१४ ॥
योगश्च चित्तरोधात्कालेनाभ्यासविरतिभ्याम् ।
तस्मिन् योगी योगी योगाचार्यैः प्रदर्शितः पूर्वैः ॥ २१५ ॥
द्रष्टुः साक्षात्कारो दृश्यान्नतोह पञ्चविंशस्य ।
षड्विंशस्य तु साक्षात्कारो द्रष्टुः स्वरूपस्य ॥ २१६ ॥
श्रुतिसम्पादितविद्वत्समनुभवोऽयं ह्ययं स एवेति ।
तच्छ्रुतदिति तत्पश्यन् यथा विमर्शो हि वामदेवस्य ॥ २१७ ॥
अपरोक्ष मिद मितोऽन्यद्ब्रह्मास्तीत्येव निश्चयज्ञानम् ।
ज्ञातुश्चित्तनिरोधो भवति हि विज्ञाननिश्चयाभ्यासात् ॥ २१८ ॥
प्राणस्पन्दनिरोधाद्रोधोऽसौ हठयोगिनां भवति ।
भगवत्प्रेमावेशाद्धिनिरोधः सुखेन भक्तानाम् ॥ २१९ ॥
एवं चित्तनिरोधा देषां योगत्व मुच्यते सद्भिः ।
जात्याश्रमादिविहितं स्वभावजं भागवतं कर्म ॥ २२० ॥
अर्पणयोगात् क्रमतः प्रददाति ज्ञानयोगञ्च ।
भक्तिर्भगवति भावः सर्वोत्कर्षात्तदाश्रयस्त्रिविधः ॥ २२१ ॥
शुद्धो मायी मायाविरचितदेहः पुमान् स एवैकः ।
मायामग्नो मायिकतनु मैशमाश्रितस्तरति ॥ २२२ ॥
पतितो जले जलं पुनरालम्ब्य नाम सन्तरति ।
जगतां व्यतिरिक्तान्तं जगतां प्रविलापमास्थाप्तम् ॥ २२३ ॥
जगतामपवादादपि शुद्धं सेवेत शुद्धधीर्भक्तः ।
स च नेति नेति वाक्याद्दृश्याद्व्यतिरिच्यते दृगात्मासौ ॥ २२४ ॥
कार्यस्य कारणात्मनि विलापमाप्नोति स क्रमतः ।
कारणकार्याभेदान्मायीवैतच्चराचरं सर्वम् ॥ २२५ ॥

माया माय्येव परः सोऽस्ति विभातीति धीः परमा।
माया शक्तिविशिष्टः सर्वज्ञः सर्वशक्तीशः॥ २२६॥
स्रष्टा समस्तजगतां पाता हर्त्ता तिरस्कर्त्ता।
एवमनुग्रहकर्त्ता भजतां परमः स एवात्मा॥ २२७॥
एकोऽखिलात्मशक्तेः प्रेरयितृत्वात् प्रभुश्च साक्षी च।
सोपादाननयैतज्जगदपि जगतां समाश्रयोऽधीशः॥ २२८॥
तस्मादहमस्तदात्मा तदधीनस्तदाश्रयस्तज्जः।
दासोऽहमिति च भावप्रकर्षतः प्रेमवाननपरः॥ २२९॥
देवविशेषः सदयो मतक्रियया जातसन्तोषः।
दास्यति फलमिति यस्तं देहिन सेवा भजेत् स खल्वपरः॥२३०॥
कामार्थं त्राणार्थं ज्ञानार्थं वा तदाश्रयं कुरुते।
सोऽपि स्वभावपाकात् क्रमतो मुख्यस्वभाव मायाति॥ २३१॥

कुमारावूचतुः।

अशरीरेन्द्रियचित्ते मनसो वचसः किलाविषये।
केनापि नोपलभ्ये विशेषशून्ये निरालम्बे॥ २३२॥
अग्राह्ये चाद्वितीये ब्रह्मणि भावज्ञता कथं भक्तिः?।

तावुवाच मुनिः।

अशरीरेन्द्रियचित्ते यदि न हि सर्व्वज्ञता न सामर्थ्यम्।
जीव इव केवलासौ कथं पुरैतत्समीक्षको भवति।
कथ मीशते स शक्तिः प्रवर्त्तमाद्या महच्छब्दे॥ २३३॥
भक्त्या लभ्यमयोग्यः कथमपि चेत्तदपि ते वच्मि।
स खलु यथा श्रुत्युक्तो जयति तथा लभ्यनीयश्च॥२३४॥
स तु वागविषयोऽपि वागविषयीक्रियते।
स तु वागविषय इति श्रूयते कीर्त्त्यते च॥ २३५॥

चेतोऽविषयोऽपि चेतो विषय इति चिन्त्यते ।
नीरूपोऽपि निरूप्यते नीरूप इति ॥ २३६ ॥
अविशेषणोऽपि विशिष्यते स्व-शक्ति-विशेषणेन ।
निरालम्बोऽपि समालम्ब्यते जगदालम्ब इति ॥ २३७ ॥
सर्वेन्द्रिय-मनसाप्यनुपलभ्योऽप्युपलभ्यते ऽन्तरात्मेति ।
अग्राह्योऽपि गृह्यतेऽभ्यासवैराग्याभ्याम् ॥ २१८ ॥
सदैकाग्रचेतसा श्रद्धाभक्तिध्यानयोगेन । 96269
अत्र श्रुतिश्च श्रद्धाभक्तिध्यानयोगादवैहीति ॥ २३९ ॥
तस्माच्छरीरेन्द्रियचित्ते भक्तिर्भाजनता भवत्यस्मिन् ।
मायैव तच्छरीरं चित्तं सर्वं ज्ञानादि-शक्तिश्च ॥ २४० ॥
स च खल्वपाणिपादश्चेत्यादि श्रुतिगणः स्पष्टः ।
अयमर्थः स्वनधार्य्यो मनसि न कार्य्योऽत्र सन्देहः ॥ २४१ ॥
स शिवः सदैकरूपो न परिणतिं विकारमाभजते ।
मायास्य विविधभावैर्नृत्यति तन्मात्र-जीवने च नटी ॥ २४२ ॥
जीवेश्वर-जगदाद्यैर्भेदैर्विविधैर्विभात्यभिन्नापि ।
इत्थम्भूता माया भागवतीत्येव भावना भक्तिः ॥ २४३ ॥
ध्यानमिदं प्रेमपरं क्रियापरं मानसी सैषा ।
अन्यक्रियैतदर्थं जयति तदन्या क्रियाव्यवस्थाय ॥ २४४ ॥
मन्त्रे गुरौ च देवे स्वात्मनि तस्मिन्नभेदभावना यस्य ।
मन्त्री स गुरुर्देवः सच्चिदात्मैवेश्वरः साक्षात् ॥ २४५ ॥
कस्मा देव मलभ्यः स परः स्वात्मेति पूर्णभावेन ।
ननु भावादपि लब्धः शिशुपालाद्यैर्विरुद्धरूपापि ॥ २४६ ॥
कुप्यति नचैव हृष्यति पूर्णात्मा पूर्णकामोऽसौ ।
भावस्वभाव एव स्वभावकं चानु गृह्णाति ॥ २४७ ॥

एवं योऽन्तर्वर्त्तते स्वभावतस्तं करोति देवोऽसौ।
तस्मात्तापुरुषहेतुर्भागवती भावनैवैका ॥ २४८ ॥
सृजति च पाति च हरति च सकलमवकलस्थिरस्फुरते।
अनुगृह्णाति च गृह्णन् स्वमनिभावान् स्वभावभावनेन ॥ २४९ ॥
निरुपाधिः सपरात्मा मूर्त्तः प्रज्ञाश्रयः सूक्ष्मः।
स्थूलः स विश्वमूर्त्तिः सुरनरलीला शरीरी च ॥ २५० ॥
सङ्कुचिताङ्गः कूर्म्मः प्रसारिताङ्गः प्रसार्य्यमाणाङ्गः।
कूर्म्मान्तरो न तद्वत्परसूक्ष्मत्वस्वभावस्य ॥ २५१ ॥
प्रभुरितिहरिरितिगुरुरिति सुहृदितिमातेति तात ईश इति।
फलमिति फलदातेति स्वयमिति तस्मिन् समाचरेत्प्रेम ॥२५२॥
शब्दमयीं वा मूर्त्तिं मनोमयीं धीमयीं वापि।
प्राणमयीं वा दैवतदेहमयीं वा समालम्ब्य ॥ २५३ ॥
नाममनोधीप्रभृति रामस्य चिन्तनात् क्रमशः।
सम्प्राप्य सर्व्वभावं भूमनि भूमात्म मास्रये देवम् ॥ २५४ ॥
आत्मत्वेन ज्ञातः स चिदात्मा सेव्यते पूर्णः।
श्रवणादिभक्तिभक्तात्स्थूलः सूक्ष्माङ्गवानपि च ॥ २५५॥
श्रवणाद्युपजातमहत्प्रेमार्द्रशास्त्रोक्ततो भक्तः।
गायति नृत्यति रोदिति निपतति रोमाञ्चकम्पको हसति॥२५६॥
श्रवणात्तदस्य तावत् स्वरूपगुणरूपनामकीर्त्तनाम्।
कीर्त्तनमेवं स्मरणं वन्दन मुद्देशतोऽपि सम्भवति ॥ २५७ ॥
मनसाङ्गेन च वाचा बाह्यकमलहृदयशादिभक्तैर्वा।
वन्दन मथ पदसेवा गुर्व्वादौ स्यात् तदैक्यभासना इव ॥२५८ ॥
अर्चार्चादिषु हृदये सर्व्वात्मनि वा यदि पदास्पृश्या।
तत्तद्व्यत्यासो विषयस्यागोऽथवा तदुद्देशात् ॥ २५९ ॥

स्वात्मनि जगदात्मानं तदर्थमर्थेषु तमेव परमार्थम्।
ध्यायेत् कारणकार्य्यप्रविष्टमूर्त्तिं बकारण मनूर्त्तम् ॥२६०॥
निजनिजविहितैर्धर्मैः समर्पितैः पूज्यते देवः।
प्रायश्चित्तैः प्रायश्चित्तकृतैः पापिभिश्च तथा ॥ २६१ ॥
सख्यं प्रिय इति भावः स च सुहृदं समानशीलयोर्भवति।
न ह्यात्मनः प्रियोऽन्यस्तदात्मभावाच्छिवः सखा भवति ॥२६२॥
भक्तात् प्रियो न शम्भोर्न च तस्मात् प्रियोऽस्ति भक्तस्य।
एतौ ततः सखायौ विशुद्धसत्त्वात्समानशीलौ च ॥ २६३ ॥
प्रेम्णैव प्रेरकभाशाद्दास्यं जीवेशयोः सततम्।
भजताश्च मूर्त्तिभेदाद्देवालयमार्ज्जनाद्यैस्तत् ॥ २६४ ॥
जीवात्मा परमात्मनि यत्ता चेतस्य शक्तितत्त्यानि।
कर्त्तृत्वादीन्यन्यैः समर्पं मुच्येत कर्म्मपाशेभ्यः ॥ २६५ ॥
यद्यत् कृतं शुभाशुभकर्म्मार्पणं माचरेत्तत्तदेव।
कर्म्मस्वातन्त्र्यात्स्वाज्ञानद्वैतार्पणादिभेदेन ॥ २६६ ॥
तन्मयधीस्तद्धस्तदर्थमेवाचरेत् स्वकर्म्माणि।
एवन्विधैव भक्तो भक्त्या सं स्वीय मर्पयेत् मतिः ॥ २६७ ॥
तत्त्वत्वादिविवेकैः सर्वं मत्वा तदेव वा तूष्णीम्।
विश्वात्मनि शुद्धे श्रात्मार्पण मेति भेदनिर्मुक्तः ॥ २६८॥
अनुकूलस्याचरणात् प्रतिकूलविवर्ज्जनाच्छरणागा।
रक्षिष्यतीति निश्चलविश्वासाद्गोप्तृत्वावरणात् ॥ २६९ ॥
कार्पण्यात्मकृपेऽस्मिन्निक्षिप्तात् समस्तभावेन।
कुर्य्यान्निखिलशरण्ये शरणं संसारतोभीतः ॥ २७० ॥
इत्यमनूर्त्तं मूर्त्तं भवन्ति भक्त्या कृपामूर्त्तं।
कुरु न पत मोहगर्त्ते भेदकूपां मायायामर्त्ते ॥ २७१ ॥

पुनरपि कुमारपृच्छतु:।

स्मरणं ह्यनुभूतार्थामोषो न कदापि दृष्टरूपस्य।
तदनुभवे का वार्त्ताऽमूर्त्ते परमात्मनोश्वरेऽचिन्त्ये ॥ २७२
अवयववतः पुरारे रवयवचिन्ता फलकरी भवति।
निरवयवे चानंशे कथमपि नैवांशचिन्तापि ॥ २७३



मुनिरुवाच।

मूर्त्तेरवयवचिन्ता विष्णवादेः फलकरी तदुद्देशात्।
न हि मर्त्त्यावयवानां चिन्ता कुत्रापि फलकरी भवति ॥ २७
एवममूर्त्तस्य हरेरुद्देशात् किमपि चिन्तयन् योगी।
अज्ञो वा स्वज्ञो वा निःसन्दिग्धं फलं लभते ॥ २७५
शब्दानुमानतः स्यात् सादृश्यात् किञ्चिदुपमानात्।
ज्ञानं सूक्ष्मधियां परमनुभूतिः स्यात् तदभ्यासात् ॥ २७६
किञ्चिज्ज्ञमल्पशक्तिं दृष्ट्वा सर्वज्ञं सर्वशक्तीशम्।
काष्ठासु ह्यनुमीयाच्चिदाद्यालोकनाद्यथारूपम् ॥ २७७
श्रुतितः स्मृतितो यच्छ्रुतमर्थं सं स्मरन्ति तत् स्मरणम्।
तस्माच्छृणोति स यथा तथैव तं स्मर्त्तुमीशतेऽज्ञोऽपि ॥ २७८
विज्ञातारं के वा ज्ञातुं शक्ता हृदादयो ज्ञेयाः।
यन्नेति नेति शिष्टं विज्ञानं तद्धि तज्ज्ञानम् ॥ २७९
भूतात्मा स्यात् कर्त्ता क्षेत्रज्ञः साक्षितां धत्ते।
स महात्मा भूतपतिः क्षेत्रज्ञोऽसौ समस्तानाम् ॥ २८०
येनारचितं विश्वं स्वमायया येन भाति यत्र वेत्ति।
यद्वृतेऽस्ति नेह किञ्चिद्यच्च न किञ्चित् प्रतीहि तद्ब्रह्म ॥ २८१
जातं जगत् स्वभावात् स्वभावतोऽन्ते विलीयते सद्विव।
मरणं स्वभावतोऽतः स्वभाव एवात्र मुक्तये मरणम् ॥ २८२

चित्रे पटे यथान्तः स्वीयं रूपं न भाति सुव्यक्तम्।
गुणरागचित्रदृष्टौ स्वरूपतो दृश्यते नात्मा ॥ २८३
अस्मात् प्रयत्नयोगात् स्वविचारध्यानयोगेन।
सम्यक् गुणरागगणेऽपहृते भवति स्वयं व्यक्तः ॥ २८४
आत्ममतिरात्मभक्त्याथात्मज्ञान्यात्मयाजीति।
अथवा देव ज्ञानी भक्तो यज्वा च योगी च ॥ २८५
योगी वा खलु भोगी रोगी वा भवतु संसृतिवियोगी।
परमेष्ठि दत्तमति र्गतिं प्रयात्येव नास्ति सन्देहः ॥ २८६
स्त्रीशूद्रश्वपचादे रप्यु पकारप्रदा त्रिधा भक्तिः।
अपि चेत् सुदुराचारो भजते चेत्यादिसम्मती रूढ़ा ॥ २८७
वैदिक-योग-सदागम-पशुपतिमत-पाञ्चरात्र-सारतरा।
परमेष्ठि परमात्मनि रतिरेव परा न चापरा सिद्धिः ॥ २८८
आरम्भो न हि नश्यति तद्रूपा सा ज्ञानकर्मयोगादौ।
क्रमतो गतिलाभावधि तदल्पमपि हन्ति संसृतेर्भीतिम् ॥ २८९
सत्वप्रबोधनफलं यदकामकृतं तदर्थं वा।
तस्य न लोको जन्यो योऽन्तो भविता च निश्चलो लोकः ॥ २९०
नेहाभिक्रमनाशोऽस्तीत्याद्युक्तिर्हरेः श्रुताच।
न हि तत्क्रियया जातः प्रभोः प्रसादो वृथा भवति ॥ २९१
स्वर्गं न चापवर्गं कृतत्रिवर्गं समर्थयेऽर्थये यत्नात्।
एकां मनन्यभावां भगवति भूतेश्वरे भक्तिम् ॥ २९२
परमात्मज्ञानभक्तिप्रवणतरावान्तरौ कुमारौ तौ।
पप्रच्छतु र्व भक्तिर्वाम्ततरश्रद्धया भूयः— ॥ २९३
ग्रस्ते ह्यात्ममले दृष्टवन्नभावाच
त्रिविधभक्तिभेदादि वतान्तरकल्पना कथम्।

ष्कवलाया विशुद्ध-सत्त्वोपाधेश्चैतन्यस्य तयोः शिवशक्तिनाम्ना गदितयोः सदामुक्तयोः सदाशिवशक्त्योः सदेश्वरयोरिति न भेदकल्पना इत्यमाख्यशक्तिरद्विर्भिति ॥

इय मायाशक्ति रमला परमात्मैवापरा नैषा।
अस्याः शक्तिविधानं स्वरूपतो नैव सम्भवात् ॥ २
जगतां योनिः प्रकृतिः कारणमिति पठ्यते सैषा।
ब्रह्मण्यपि ते शब्दाः श्रूयन्ते ब्रह्मसूत्रेभ्यः ॥ ३
देवात्मशक्तिरिति खलु मन्त्रात् तथात्मशब्देन।
कूर्मपुराणस्मरणादात्माहमिति देव्युक्तेः ॥ ४
मायातीता त्रिगुणातीता शान्तित्वमस्येति।
श्रवणादस्याः परमब्रह्मत्वं सिध्यते देव्याः ॥ ५
यातीतगोचरतरा वचसो मनसो विशेषणेत्यादि।
विष्णुपुराणश्रवणात्परमात्मशक्तेरभेदता जयति ॥ ६
परमात्मन एकस्य त्रिमूर्तयो ब्रह्मविष्णुशिवाः।
हरिवंशे स्मृतमेतत्सर्वेऽप्यङ्गनारोशाः ॥ ७
शक्तेः शक्तिमतश्चाभेदोऽत्र श्रूयते बहुशः।
तस्माच्छक्तिश्चाभिन्ना शक्तिरिति देवता न भवति ॥ ८
भूमेर्यथा जडायाः सचेतना देवतापि भूमिरिति।
एवं समस्तशक्तेरधिदेवी जयति चिच्छक्तिः ॥ ९
तस्मान्माया शबलं ब्रह्मैषा स्त्री गिरा पूज्या।
नेयं योषिन्न पुमान्न षण्ढ इति च श्रुतिः सिद्धा ॥ १०
स्त्रीमूर्त्त्योऽम्बिकैका तथैव पुंमूर्त्तयः शिवश्चैकः।
तद्दुभयमूर्त्तिरमूर्त्तस्त्वात्मन इह चिन्त्य परमस्य ॥ ११
वाणी चेति भवानी शब्दात्मा जयति शङ्करश्चापि।

नीतिर्गौरी प्रश्रु नय इच्छा मेधा हरः कामः ॥ १२
एवं शिवयो र्भेदाभेदः संपश्यति पुराणादौ ।
एकार्थशब्दवाच्याविती तस्मान्न वाचयोर्भेदः ॥ १३
यद्यद्भावं शिव इह धत्ते धत्ते तथैव शिवा ।
एकात्मनोस्तयोः स्त्री-पुंभेदो लिङ्ग-भेदतो वाच्यौ ॥ १४
न स्त्री पुमान्न षण्ढो नात्मायन्नात ! सिद्धोऽस्ति ।
प्रणवस्यार्थविचारे नादान्तवासयो रनयोः ॥ १५
एका वास मुमाया उमापते स्वापि आत्मैम: ।
शिवशक्त्यात्मक मखिलं सत्यं प्रत्येमि मूर्त्तिमद्भावम् ॥ १६
सूक्ष्मस्थूलसुरासुरनरतिर्य्यक्स्थावरं तथा न शिवौ ।
एतौ समस्तजगतां सारौ पूर्णैककारणाकारौ ॥ १७
देवाकारौ अयतः भजदीश्वरभावणाधारौ ।
त्रिविधध्याने साम्यान्नामनि धामन्यपीह साम्याच्च ॥ १८
सर्व्वज्ञतादि शक्ते रति साम्यादीशलिङ्गमुभयोश्च ।
तद्विष्ठामावस्थारूपानुष्ठानतात्मसाम्याच्च ॥ १९
नाम्नोऽपि ग्राः षड्विध मनुसन्धानन्तयोर्भजन्त्यन्तः ।
श्रुतिभिः स्मृतिभि स्तन्त्रै रभेद एवोच्यते शिवयोः ॥ २०
स कुमारः स कुमारीत्याद्याभिः श्रुतिभि रीश-शावकाभिश्च ॥ २१
लैङ्गेऽपि स्मृतमित्थं यथा शिवोयं तथैव देवीति ।
योऽसौ विश्वेश्वर इह विश्वं व्याप्यास्ति सैव विश्वेशी ॥ २२
मोक्षाय देहभाजां धत्ते भगवान् यत्तूरूपम् ।
हर इति हरिरित्यम्बे आदित्यइति शिवानमः स्मरति ॥ २३
अन्यच्च—एकं ब्रह्म बहुलीक्रतां स-मनः श्रुतः यथात् ।
इच्छतीऽभूद्द्विधा तस्याः स्तीऽभवदितमु ॥ २४

स्त्रीपुम्भेदादुभयोर्न्यूनाधिक्यं विलोक्यते सत्यम्।
लीलयेश्वरसत्वे पुंस्त्वं वा नैव नारीत्वम्॥ २५

तत्तदुपासनभेदात्प्रतिभेदादुपासकानाञ्च।
फलभेदोऽभेदफलन्त्वभेदसम्भाविनां सत्यम्॥ २६

चिच्छक्तिराद्या जगतां भवाया भजद्दशां प्रीतिकृते सदैका।
ब्रह्मेशनारायणगौरिगिरीन्द्रसुता पयोराशिसुतेति भाति॥ २७

ब्रह्मविष्णुशिवमुख्यविग्रहं विग्रहं गिरिभुवः श्रियो गिरः।
लीलयाश्रयति सर्व्वशक्तिमानेक एव नटवन्महेश्वरः॥ २८

ब्रह्मेशनारायणकारणं यद्
अव्यक्तमव्याकृत मात्मसत्वम्।
तद्वैष्णवा विष्णुमिति स्मरन्ति
शैवाः शिवं शक्तिमितीह केचित्॥ २९

न स्त्री पुमान्न न नपुंसप्रकृतिस्तदात्मा
एकः स सेव्यत इहान्तरशेषभावैः।
ओमित्यमेति शिव इत्यथ वा शिवेति
ब्रह्मेति विष्णुरिति सूर्य्यइतीष्टभेदात्॥ ३०

तमखिलैर्जपयोगतपोध्वरैः सुकृतभोगसुखैरपि चार्पितैः।
अखिलभावपरं परिभावयन् निखिलभावसमाश्रयमाश्रयेत्॥ ३१

तत्कृते विहितमल्पमप्यहो। न व्ययं व्रजति भावकः पुरा।
तद्बलादपि विधाय योगिनं योगिनं नयति मोक्षमव्ययम्॥ ३२

यच्छ्रुतिस्तत्प्रतिफलादिदायिनी यच्छ्रुतिस्त्रिजगदुन्नतिप्रदा।
कीर्त्तनं निखिलपापकृन्तनं यस्य तं शृणु नमस्य कीर्त्तय॥ ३

संस्मृतिर्निखिलशोकविस्मृतिं तत्पदं पद्मतिविस्मयं परम्।
पूजनं सकलपूज्यपूज्यतां यस्य यच्छति तमिच्छ संविधातुम॥

दासता भवभया दासतां यस्य यच्छति निर्वैरदासताम् ।
चेतसा व्रज तदङ्घ्रिदासतां सङ्गमेन तपया सदा सताम् ॥ ३५
सख्य मस्य खलु सर्व्वभोगतः सख्यमाहरति लोकदुस्त्यजम् ।
स्वं निवेदयति योऽस्य सोऽपि तं स्व प्रवेदयति नित्यनिर्भयम् ॥ ३६
यत्र च शरणतया शरणं ज्ञाता प्रीतिरेव परिपूर्णलक्षणम् ।
स्वं प्रयच्छति जगद्धितशरणं तं शरणं न हि विहातु मर्हसि ॥ ३७
वेदनं हरति यस्य तत्त्वतो वेदवेद्यनतवन्धवेदनाम् ।
वेदनायकवरस्य तस्य किं वेदनेऽपि मनसास्ति वेदना ॥ ३८
यस्य जापकवरस्य विच्युते देवतादिगतिरेव दुर्गतिः ।
भावतो भवति भावशुद्धितस्तं जपाचरमुमापतिं शिवम् ॥ ३९
निःशेषयत्यघगणं विपदो विहन्ति
सर्व्वाः प्रपूरयति सर्व्वमनोरथांश्च ।
बन्धाद्विमोचयति सर्व्वत एव यस्य
नामापि संस्मृतमतः स्मरतामभिस्तम् ॥ ४०
आत्मेति वा निश्चिनतं स्वनिश्चयैः सदैकरूपैकरसं विशुद्धम् ।
भजस्व वांशांशिकभेदभावैर्भक्त्यैकया भक्तजपात्तचित्तम् ॥ ४१
भजस्व वा तं बहुमन्त्रभेदैर्बहुप्रकारैर्बहुरूपमेकम् ।
एको द्विधा स त्रिविधश्चतुर्धा स पञ्चधा सप्तविधोऽप्यसंख्यः ॥ ४२
भोगिभोगशयनं हरिं तथा भोगिभोगचयभूषणं हरम् ।
भोग्यभोगितरभावतः स्थितं भोगमोक्षफलदं समाश्रय ॥ ४३
सत्वमेक ममलं सनातनं शैववैष्णवविभेदतः स्तुतम् ।
मोहवेदि गुणभेदवर्शनात्मदर्शिनमपास्तकल्मषम् ॥ ४४
ब्रह्मविष्णुगिरिशात्मिकात्मनां नामरूपगुणवीर्यशक्तिभिः शिवः ।
एक एव भगवान् विभाव्यते पुम्प्रियातत्तुरनूनशक्तिमान् ॥ ४५

नामरूपगुणकीर्त्तिभिर्भिदामिषु भावयति यो मतिच्युतः ।
स च्युतो भवति भावना या भेदसाध्यवसिताद्विभिः ।
तत्समर्पय जगत्पतीश्वरे सर्वकर्मनिवहैर्विमोचसे ॥ ४६
कर्म्मसूत्रवशतः स ईशतो यद्ददाति सति तत् प्रवर्त्तते ।
दारयोषिदिव यत्रचेष्टया चेष्टसे न खलु तेऽस्ति कर्तृता ॥ ४७
कर्म्मणा स खलु कर्म्म कारयेत् कर्म्मणा स फलदोऽपि कर्म्मणाम् ।
कर्म्मसूत्रमिदमीदृशं प्रभो ! कर्म्मणा भ्रमति कर्म्मपूरुषः ॥ ४८
जन्ममृत्युविपदादिनीच्छया जायते तव तदिच्छयैव चेत् ।
तत्कथी तव कथं स्वतन्त्रता कर्तृताम्बुज विमोहिनी मतः ॥ ४९
सर्व्वविश्वजनकोऽस्यविश्ववानीश्वरः स हि भवानीश्वरः ।
मायिकोऽसि स च माप्यनन्तदृक् किं वहसाग्रह वान्तमानिताम् ॥ ५०
भूजलाद्यनिलखप्रमुख्यया सोऽष्टमूर्त्तिधरयाष्टमूर्त्तिधृक् ।
षोडशात्मकविकारयुक्तया तद्वि निर्मितविचित्रकार्य्यया ॥ ५१
निष्क्रियोऽसि सकलं स्वमायया स्वीकरोति सोऽच्युते ।
तव सर्व्वगतिताविवेशयन्वोत्तसे निखिलकर्म्मबन्धनैः ॥ ५२
कर्तृ कर्म्मकरणानि दैवतञ्चेष्टतेऽधिकरणस्य योगतः ।
सन्निधानवशतस्तदात्मनः साक्षिवत् स्फुरसि निर्म्मलोऽक्रियः ॥ ५३
इन्द्रियाणि खलु चेष्टयन्त्यमुन्देह मिन्द्रियगणान् समीरणाः ।
तान् मनस्तदपि धी रहूच तान् तत्क्रियाफलदशक्तिरैश्वरी ॥ ५४
तत्त्वमत्र भवतो न विद्यते पूर्णविद्गगननिर्म्मलात्मनः ।
नियतस्य न गतिस्तथागतिर्निर्भ-
योऽसि भवताप्तिनिर्भ्रमः ॥ ५५
अथवा ! दुःखानि शोचयति वेदितसुखराणां
शोच्यानि शोचयतो निजसन्तानाम् ।

आदेशपालनकृतेऽखिलकर्म्मणाभोः
सम्पद्यते न खलु कर्म्मफलोपभोगः ॥ ५६
यत् त्यक्तं प्रथमं पुराय पुरतो यत् त्यज्यते तत् त्यज
त्यक्तं प्रथमत एव यत् न मननात् स्वप्नेऽपि मा तत् त्यज।
धर्म्मं संश्रयतत्परं परिहरन् धर्म्मं पुरस्तात्परं
प्रत्यक्षं प्रविहाय स्वानुभवतः प्रत्यक्षतः स्थीयताम् ॥ ५७
धिक्कृत्य संसारवदृष्टसिद्धीः स्वीकृत्य संसारवदृष्टसिद्धीः।
विधाय तुष्टिं नव चन्द्रमौलिजां विधाय तुष्टिं नवचन्द्रमौलिजा॥ ५८
वधेन युक्तः स्फुरदिन्द्रियाणां वधेन युक्तः स्फुरदिन्द्रियाणाम्।
तत्प्राप्तये ज्ञानमुरीकुरुष्व तत्प्राप्तये ज्ञानमपाकुरुष्व ॥ ५९
विक्षेपयोर्मिं सकलां विहाय विहाय चिन्तामपि भोगजाले।
अहन्मयं मोहमलं विहाय विहाय खेदं व्रज साम्यमन्तः ॥ ६०
निष्कामं कुरु कर्म्म धिक् कुरु भवं मोक्षाय बुद्धिं कुरु
श्रेयोर्थी शिवकं नमस्कुरु गुरुं स्वं योगतः संस्कुरु।
मा शक्तिं कुरु कुत्र चाक्षयमतः स्वात्मानमङ्गीकुरु
प्रेमान्तः कुरु सर्व्वदैव शरणं सर्व्वात्मना शङ्करम् ॥ ६१
बन्धून् स्वं त्यज स्वं त्यजालयरुचिं स्वर्गस्पृहां स्वं त्यज
देहं स्वं त्यज सर्व्वथेन्द्रियगणैः [illegible]नं त्यज।
सत्त्वं स्वं भज सत्त्वतोऽपि पुरुषं सूक्ष्मं स्वरूपं भज
भक्त्यात्मभंज सर्व्वभावशरणं सर्व्वात्मना शङ्करम् ॥ ६२
गुरुं प्रियं निज पित[illegible] स्वभी[illegible] शरणदमिष्टदैवतम्।
[illegible] शङ्करम् ॥ ६३
जगत्करं [illegible] तिरस्करं त्रिविधं सर्व्वगुणाकरम्।
[illegible] विमोहजे तमसि भजस्व शङ्करम्॥ ६४

स सर्व्वतः पाणिपादशिरःकर्णाक्षिनासिकमुखोपेतः ।
संव्याप्य सर्वं स हि भातिरिक्तः सर्वोस्य सर्वो बहिरन्तरात्मा ॥ ६५
न तस्य कार्य्यं करणञ्च विद्यते न तत्समोऽस्त्यभ्यधिकश्च कश्चित् ।
परास्य शक्तिर्विविधा श्रुतासि स्वाभाविकी ज्ञानबलक्रिया च ॥६६
मायाभिरेकः पुरुरूप ईयते समानरूपादिविवर्ज्जितोऽपि ।
यन्नस्य भोक्ता स धियो नियोक्ता फलस्य दाता फलभूत एकः ॥६७
ब्रह्माणमग्रे विदधाति यो वै तच्चिन्तया तस्य हृदि प्रसन्नः ।
वेदांश्च सर्व्वान् प्रहिणोति तस्मै तं बुद्धिबोधं शरणं प्रयाहि ॥ ६८
ब्रह्मादयो यत्कृतसेतुपालाः यद्भीतितो वाति सदैव वातः ।
अग्निर्दहत्यर्पि जनांश्च मृत्यु रिन्द्रोऽवतीदं नम तं प्रनम्यः ॥ ६९
ब्रह्मादयस्त्वक्कलेवरान्ता एते यदानन्दलवोपजीव्याः ।
पूर्णन्तमानन्दमहाम्बुराशिमपारमन्तः शरणं प्रयाहि ॥ ७०
हृद्ग्रन्थिरुच्चैरिह भिद्यते प्राक् छिद्यन्त एवाऽखिलसंशयाश्च ।
संक्षीयते कर्म्मचयं समूलं यस्मिन् सुदृष्टे कुरु तत्र दृष्टिम् ॥ ७१
यज्ञानतो भाति समस्तमेतद्यत्सत्तया वापि विवर्त्तते च ।
आनन्दतो नन्दति यस्य सर्व्वन्तमेकमात्मानमुरीकुरुष्व ॥ ७२
यो मध्यतो मध्यतमः सदास्ति बहिर्बहिर्यो न च यस्य वेत्ता ।
योऽन्तोन्ततश्चादिरथादितो यः सोऽन्तर्बहिर्वान् शरणं सदास्तु ॥७३
विष्णुं यसिष्णुं प्रभविष्णुमेशं शिवं सहिष्णुं भजदागसाञ्च ।
निराकरिष्णुं निखिलस्य भीतेस्तमुत्पतिष्णुर्भज तात । भूयः ॥७४

पुनरपि कुमाराभूकृतः ।

कालः स्वभावो नियतिर्यदृच्छा भोगोऽस्य कारणमीशरो वा ।
दृष्टो सतञ्चलिति भूपजाभ्यां दृष्टो सुमित्राणाबदवत् मभुदः ॥७५
कालः स्वभावो नियतिर्यदृच्छा जीवो जगत्कर्म्मापि न स्वतन्त्रः ।

तत्तदेव हि पुरा महात्मिका शक्तिरेक परमात्मिका ॥ ९९
अर्णवाम्ब इव सं चलन् तुषार् [illegible]यपि च [illegible]लया ।
यो[illegible] ॥ १००
भावनात्मनि किलात्म[illegible] [illegible]णैक[illegible] ।
स मदृष्टिरथ वीक्षते स्वं [illegible] ॥ १०१
सृष्टिर्यथा स्वाद्भवतीह भूयो [illegible] ।
स शास्त्रयोनिर्जगदेकयोनि[illegible] ॥ १०२
अजं सदानन्द[illegible] [illegible] ।
[illegible] ॥ १०३
न कर्तृकार्य्यं न कारणं तत्र दीर्घह्रस्वाणुबृहत्तथैव ।
न स्पर्शगन्धं न च रूपशब्दं रसं न तच्चैकरसैकरूपम् ॥ १०४
सर्व्वाधारमनाधारं सर्व्वगं सततावलम् ।
तदाकाशमनाकाशमकिञ्चिद्वस्तु किञ्चन ॥ १०५

आद्यन्तमध्यरहिते स्वविकाशमात्रे
शक्तिः परापरपरास्त्रविचित्ररूपा ।
सामर्थ्यवत्तनुभृतां निभृतेन्द्रजाल-
विद्येव विश्वपरिणामविवर्त्तलीला ॥ १०६ ॥

हेम्नीव कटकादिविचित्रं वारिवोर्म्मिचयबुद्बुदफेणाम् ।
मायया मरुमरीचिजलाभो भाति तत्र भुवनभ्रम एषः ॥ १०७
स केवलः शुद्धचिदेकरूपः कर्त्ता विकर्त्ताऽप्यचलोऽप्यलिप्तः ।
अनन्तसामर्थ्यचिदात्मशक्त्या सर्व्वप्रया सर्व्वमिदं करोति ॥ १०८
सर्व्ववित् पुनरबाधितेप्सितोऽनन्तशक्तिरविलुप्तदृक् सदा ।
नित्यतृप्तिरपि लोकवत्तया सृष्टिमारभत एव लीलया ॥ १०९
सा ज्ञानमूर्त्तिः समुदेति पूर्व्वमिच्छामयी सैव विभाति काले ।

एवं सा सङ्कोचविकाशशालिनी शक्तिर्माया प्रकृति रित्युच्यते ।
सापि धर्म्मादिसमरूपेण स्वांशभूतानगुणभ्राम्ति ॥ ११७
ज्ञान-ज्ञातृ-ज्ञेय-भावं त्यजन्ती शुद्धज्ञानाकारतो मोचयन्ती ।
विद्येत्येषा प्रोच्यते तत्स्वरूपा ब्रह्माकारा निर्म्मला सत्वहृत्तिः ॥ ११८
विद्या विद्यामयी मायाशक्तिस्तस्य परात्मनः ।
व्याप्या सा देवदेवस्य व्यापिनी सा स्वसन्ततेः ॥ ११९

स देवः सातत्येन सर्व्वं समाप्नोतीति आत्मेत्युच्यते, निस्त्रि-गुणत्वात्परमकल्याणरूपत्वाच्च परमशिव इति, जगत्प्रवेशक-त्वाद्व्यापकत्वाच्च महाविष्णुरिति, ईशनशीलत्वाच्च महेश इति परमैश्वर्य्याश्रयत्वात् परमेश्वर इति,सर्व्वप्रकाशकत्वात्परं ज्योति-रिति, बृहत्वाद् बृंहणत्वाच्च परब्रह्मेति, भूतानामुद्भवविनाशा-गतिगतिविद्याविद्यादिवेदृत्वेनानपायिमहामाहात्म्येन भगवा-निति, जड़ानां मायाशक्तिकार्य्याणां चिच्छक्तिप्रदत्वात् परमा शक्तिरिति, प्राणानामपि प्राणयितृत्वात् परमप्राण इति, आकाशादीनामपि प्रकाशकत्वादाकाश इति, जीवानामपि जीव-यितृत्वाज्जगज्जीवन इति, नारस्यायनत्वान्नारायण इति, योगिनां रमयितृत्वाद्राम इति, स्वमायया पाशबन्धन पाशमोचकत्वात् पशुपतिरिति, महत्वात् क्रीड़कत्वान् महादेव इति,सर्व्वदुःखहर-त्वाद्धरिरिति हर इति च, आदित्वादादित्य इति, सर्व्वात्मकत्वात् सर्व्व इति, 'सर्व्वं खल्विदं ब्रह्म'—'सर्व्वं तद्देवेति' च स एव सर्व्व इति, अन्यैरपि तत्तल्लीलावतार‌रूपगुणकीर्त्तिविधायकैः शङ्कर-विरूप[illegible]-देव-गुरुहरादिभिर्नामभिः [illegible] इत्यादि अप-

दिश्यते । स तु स्वमायायां निर्म्मलसत्त्वरूपायां सन्निकर्षात् प्रतिबिम्बित इव जगत्कारणमूर्त्तिरीश्वर इत्युच्यते । स्वमायापरिणामरजोलेशजनितमानस-ज्ञान-ग्रहणाज्जगद्विभागसङ्कल्प-विकल्पकारी सूत्रात्मेति, ततः स्पष्टतया आकाशादिप्रपञ्चपञ्चीकरणजनितविराड्रूपग्रहणात् विराडिति जगत्कार्य्यकारी जायते । जीवास्तदपरांशा रजस्तमोमलिनोपाधयः प्राज्ञतैजसविश्वतां व्रजन्तः सुषुप्तिस्वप्नजाग्रदवस्थाभागिनः दीपाद्दीप इव तप्तायःपिण्डात् स्फुलिङ्गा इवोच्चलिता बद्धा इव प्रतिभासन्ते । अनाद्यज्ञानजनितकर्म्मचक्रमनुसरन्तः सरन्ति संसारेषु सृष्टिस्थितिप्रलयरूपेण । ईश्वरस्तु निर्म्मलसत्त्वोपाधिकतया सदा सर्वज्ञतया च स्वरूपाभिन्न एव विश्वभूतः सदामुक्तः सदैवेश्वरं स्वशक्तिसाक्षी जगत्कर्त्तापि सर्व्वदोषास्पृष्टो महापायोऽपि शुद्धः केवलोऽद्वितीयः प्रतिभासते जीवचक्रं परिभ्रामयन् ।

परागदृष्ट्या स ईशानः प्रत्यग्दृष्ट्या स केवलः ।
एको हि परमात्मा सावाकाश इव निर्म्मलः ॥ १२०
उग्रां शान्तां च मिश्रां च दर्शयन् प्रकृतिं स्वकाम् ।
ईशत्वमोशः कुरुते नयवान्नृपतिर्यथा ॥ १२१

जीवास्तु स्वकर्म्मचक्रेण भ्रमन्तः कदाचित् सुकृतिविशेषपरीपाकैः सद्गुरुसङ्गमवाप्य भगवज्ज्ञानयोगपथमनुसृत्य यतन्तः क्रमेण तदीश्वरप्रसादेन तमेवेश्वरं स्वस्वरूपं ज्ञात्वैव अविद्योपाधिहानात् प्रतिबिम्ब इव बिम्बात्मभूका मुक्ता भवन्ति ।

जीवेश्वर[illegible]
[illegible]तु[illegible] ॥ १२२
[illegible]

परं ब्रह्मैकता प्राप्तो सर्वं चैतदसत्यकम् ॥ १२३

कैवल्याकाङ्क्षिणस्तु ऐश्वर्यवत्तात्मभावनया चित्तलयासम्भवात् न भावयन्तु । जीवेश्वरैक्यादिनो ब्रह्मैकत्वभावनं मोक्षसाधनमिति स्वीकुर्वन्तोऽपि तज्ज्ञानमपारमार्थिकमिति वदन्ति, तेषामपारमार्थिकज्ञानमेव । ये तु सुखस्वरूपं निःश्रेयसमिति मन्यमानाः सुखस्वरूपे सुखं नानुभवन्तीति वदन्ति, ते नानुभवन्त्येव चित्तहानात्मकत्वात्सुषुप्तिवज्जडस्वभावो मोक्ष इति कुतर्कयन्ति कुतर्कयन्त्येव ।

कुमारावूचतुः ।

आब्रह्मलोकादपि पातभीत्या-
नैकान्तमात्यन्तिकमस्ति सौख्यम् ।
मोक्षेऽपि साक्षात्सुखरूपे चित्तं
विना कोऽस्तु सुखानुभूतिभुक् ॥ १२४

यथातिदुष्टप्रजमाद्रिराज्यं तथा च कुष्ठादिहतं वपुः स्वम् ।
यथा प्रिया मप्रियवाक्यदुष्टां भोक्तुं न मोक्तुं च तथैव चित्तम् ॥१२५

मुनिरुवाच ।

चित्ते नष्टे कारणोपाधिहानादाकाशाभः पूर्ण एकोऽवशिष्टः ।
नष्टोपाधिर्निर्गतांशो निरंशो ब्रह्मैवासौ भासते ब्रह्मभूतः ॥१२६
न जायते न म्रियते न मुह्यति न शोचते नेच्छति नान्य दीक्षते ।
स्वबोधवत्येव सुखं स्वरूपमस्मिन्नवास्तेऽनुभवस्वरूपः ॥ १२७

[illegible] ।

दुःखातुरस्यैव सुखस्पृहा [illegible] कदापि दुःखम् ।
[illegible] किम् ॥१२८
हित्वा [illegible] पूर्णकामः ।

यः कामहेतुं किल चित्तहूतं कथं स मुच्यात् तु ह्यात्मवित्तैः ॥१२९
आद्यन्तवत्स्व प्रमनस्यमोहं सुखे च दुःखे नियतं सुखार्थी ।
अज्ञानजं चित्तमहो ! यदीहि किमेह ते स्वप्नमथ प्रबुद्धः ॥ २३०
स्वयंप्रकाशे परमात्मनः पदे मूर्च्छा सुषुप्तिर्नजडोपमा तथा ।
मूर्च्छा सुषुप्तिः खलु चित्तवृत्तिर्विचित्तमात्मानुभवो हि मोक्षः॥१३१
अजानतः कोऽस्मि कुतः क यास्ये वा नास्मि बद्धः किमिदं क मोक्षः।
इतीव कारागृहयन्त्रितस्य कुतोऽस्वभीतिः क सुखं जनस्य ॥ १३२
सदा सदभ्यासपरः स्वचित्तं संशोध्य तेनैव समुत्तराय ।
नावं यथा पारगतस्त्यजेत्तथा ग्रन्थवित्तोज्झति मोक्षपारम् ॥ १३३
यथा न बोधस्तव जायतेऽद्य तदा प्रबुद्धैर्गदितं प्रतीहि ।
किमाप्तवाचा नृपजोऽन्त्यजालयस्थः स्वराज्यप्राप्तिसुखी न जातः॥१३४
नृपं प्रयागोज्झितदेहमीक्ष्य चोरोऽपि तत्साध्विति मन्यमानः ।
तत्याज देहं हि यतस्तथैव समाचरध्वं चरितं पुराणैः ॥ १३५

ज्ञात्वा परं स मनुभूय निरस्तमोहाः
प्राप्तान् स्वसिद्धिविभवानपि सं विहाय ।
यस्माद्धि ग्रन्थगुणमद्वयमात्मतत्त्वं
तस्मान्न मोक्षपदवीपरिमार्जनीया ॥ १३६

अतश्चित्तमनादिसम्बन्धो बन्धुरिति, द्वैतदृष्टिर्विविधविनोदहेतुभूता प्रियेति, अविद्येयं जननीति, सङ्कल्पस्त्वौरसः पुत्र इति, स्नेहेन नापेक्षणीयः—युधिष्ठिरो धर्मावतारः सुयोधनं स्वबन्धुमपि स्वकुलं विरोधकारिणं घातयामास। लोकापवादभयाद्रामोऽपि प्रियां सीतां तत्याज। जामदग्न्योऽपि जनकप्रीतये जननीमपि जघान। सत्यकामो दशरथः प्रियमपि रामं गुणाभिरामं तत्याज। तन्निःशङ्कं तत्तद्दोषप्रवाहहेतूनिमान् जहीहि।

जीवो जाड्यो मोहितः स्वप्नपुत्रालोलं बालं शोकजालाहताङ्गम् ।
सङ्कल्पाङ्गं चित्तनामानमन्तर्मोहाग्रस्तो लालयन्नस्ति बद्धः ॥ १३७
चित्तं पुत्रञ्चाभिषिच्य स्वराज्ये शास्तीवासौ भ्रान्तमन्त्रोपगूढः ।
भ्रान्त्यै कान्तेकान्तयाऽनन्त मूढः स्वात्ताक्रोडोजीव्यते चातिगूढः॥१३८
चित्तं पुत्रं तन्निराकृत्य योगैस्तातानर्थैकास्पदं क्रीडमानम् ।
स्वेहं हित्वा प्रकृतेर्मोहहेतोः स्वाराज्यं संभुङ्क्ते विज्ञानलभ्यम्॥१३९
विज्ञो राजा मन्त्रिणं वा सुतं वा दुष्टं मत्वा निग्रहेणाग्रहेण ।
बध्वा हत्वा गुप्तमन्त्रैः स्वतन्त्रः क्षितैवासौ मोदते चाद्वितीयः॥१४०
स्वर्गात्पाता यातनायां निपाता गर्भावासो रोगशोकादयस्ते ।
यस्मात् प्रायः नैव विश्रान्ति लेशस्तस्य त्यागे का व्यथा चेतसस्ते॥१४१

कुमारावूचतुः ।

कथं प्रवर्त्तते चेतः कथं वा विनिवर्त्तते ।
किं वा स्वरूपं चित्तस्य चित्तादन्यः कथं पुमान् ? ॥१४२

मुनिरुवाच ।

आत्मनः प्रतिकृतिः प्रकृतिः प्राक् सङ्कृतौ मन इति ।
तन्मनः सृजति पाति नाशयत्यात्मनैव लयमेति मुह्यति ।
स्वान् गुणानगुणनिर्मलात्मनि भ्रष्टदृष्टिरवरोपयत्यपि ॥ १४३
सङ्गमेति विषयैकचिन्तया सङ्गतो भवति कामसङ्गतम् ।
तेन मोह मथ विस्मृतिं ततो हीनसम्पति समेति चापदम् ॥१४४
तत्प्रणाशयिषु मोक्षमीरसं सङ्गजं सुखमसङ्गतः क्रमात् ।
सं विरज्य रजसोऽतिनिर्मलं सत्त्वमाश्रयति मुक्तये ॥ १४५
चिन्तया सुदृढया त्वनिष्ठया चिन्तयात्मकलनस्य कालतः ।
लीयते स वासनैः समन्ततो योगमेत्य खलु योगसाक्षिणः ॥ १४६

तन्निग्रहस्य परिबोधय सम्प्रति स्थापयात्महृदये स्वधिया या।
प्रापयिष्यति गतिं सुपुरातनां यायिष्यसि न चेत कृतवतं ॥ १४७

गर्भाधिवासजनिमृत्यु कृतान्तचेष्टा-
मुत्पातपातभयशोकजकर्मनिष्ठाम्।
दोषांश्च मनोजमनसोर्वपुषश्च तत्त्वं
चित्ते निवेश्य विरमस्व रमस्व विष्णौ १४८

क्षण मुद्भवसंक्षय मध्रुवं विधिवशं सुखदुःखभयादिकम्।
न हृदि चिन्तय चिन्तकमोहदं स्वमुखमेव विचिन्तय निर्भयम्॥१४९

दृष्टवदानुश्रविकं सकलमनित्यं विभाव्य धिक्कृत्य विगलन्।
मनोरथः प्राक् चिन्तय तद्वत्पुनर्न दुःखाय ॥ १५०

जहि मनोरथमस्थिरमितालं जहि मनोभव मस्तमनोरथः।
जहि मनोऽपि मनोभवनाशतो न भविता जननीमनसस्ततः॥१५१

स्वयमसौ पुरुषः खलु केवलो जयति जन्मविनाश परिच्युतः।
सुखमयः सुखदुःखपरिच्युतो न भवतीह कदापि प्रच्युतः॥१५२

न मही न जलं न महो न मरुन्न च खं न मनः प्रकृतिर्विकृतिः।
विकृतेः प्रकृतेरपरः सपरो दृशिमात्रवपुर्न वपुर्भवान् ॥ १५३

अपरिणाम्यगुणाः प्रतिसंक्रमाद्दृगसि दृश्यमिदं विपरीतभम्।
स्फुरदहङ्कृतिमुख्यमवेक्ष्य हितमात्मस्थिति मोहि परात्मनि ॥ १५४

चलमिदं निखिलं त्वचलो भवान् जडमिदन्तु भवानसि चिन्मयः।
असुखमेतदयासि सुखात्मकः सुखमुपैत्य सुखी न सुखी भवान्॥१५५

मनसि ते सुखदुःखभयादिका विकृतयो ह्यविकार्यसि सद्दृक्।
मनसि लीनतरे च सुषुप्तितः क्व विषयाविषयौ क्व सुखादयः॥१५६

प्रतिदिनं प्रतिबुद्ध जगत्त्रयं स्वपन एव करोति च सुमुखः।
अनवधानवशाद्भवान्तरस्य ज मतो न मनः सुमको भवान् ॥१५७

द्रविणबन्धुवपुःप्रमुखे वृथा भ्रमसि किं क्षणिके सुखलोलुपः।
सुखमये व्यभिचारतया स्थिते सुखमुपेहि सदैव सदात्मनि ॥१५८
न भवनेन वनेन सुखं क्वचित् कमपदेऽपि पदेऽपि सुधाशिनाम्।
स्फुरति निर्वृतिरात्मनि निष्ठिते भवति सा स्थिरचित्तवतां सताम्॥१५९
जगदिदं खलु भूतविजृम्भितं तदपि मायिकमित्यवधारय।
भ्रममयी तव सापि निरूपिता न भवतीति निरूप्य जहि भ्रमम्॥१६०
भूतानि निर्णीय गुणैः प्रवृत्तैः प्राणान् क्रियाभिश्च मनो मतिश्च।
निर्णीय सङ्कल्पविनिश्चयाभ्यां समाधिसुप्तोरहमस्य साक्षात् ॥१६१
पुरारिमूर्त्या प्रयतः पुराणि संयम्य नारायणतामुपेतः।
अनन्तभोगो परियोगनिद्रां भजामृतस्वादुमयीं प्रबुद्धः ॥ १६२

वाचश्चेतसि तन्मतौ महति तां तं प्रत्यगात्मन्यजे शान्तेऽनन्तमहिम्नि चिद्घनसुखाकारे विकारे शिवे। ध्यानेनैव समर्प्य देहमपि च प्रारब्धभोगेऽन्तिके विश्रामं समुपैहि सद्गुरुचरणं प्राप्तो न वाम्भ्रमः। एकासने समुपविश्य विनाश्य विघ्नानेकान्तकान्तनिलयः परमेशमन्त्रः। कोऽवधारय निवारय चित्तमेकमेकादृष्टिरत्र लप्स्यसि तत्पदं स्वम्।
अथवा बहिरेतरेव तत्परमात्मचरणतत्परो भव।
स इहात्मि स भाति केवलस्तदृते नास्ति न भाति किञ्चन ॥१६३

कुमारावूचतुः।

भूतेन्द्रियाणीह मनो मतिश्च स्वैः स्वैः क्रियाभिः स्वगुणैश्च दृश्यते।
तन्निर्गुणो निष्क्रिय एष जीवो ज्ञेयः कथं ब्रूहि गुरो पुनः ॥ १६४

मुनिरुवाच।

भूतेन्द्रियाणीह मनो मतिश्च स्वैः स्वैः क्रियाभिः स्वगुणैश्च दृश्यते।
ऐनैकजीवः सन्तोषमोदमानादि स अन्यतयाप्युपलक्ष्यः ॥ १६५

कुमारावूचतुः।

जीव एव कुरुते भुते फलं मोहमेत्य यदि बोधमेति च।
विद्यया त्वपरया पुराहतो तत् किमीशितुरिह प्रयोजनम् ॥१६६
ईश्वरोऽपि मनसा मनीषया सन्तनोत्यवति सोहमाश्रयेत्।
सर्वमाभजति योगतामसौ को विशेष इह वेशजीवयोः? ॥ १६७

मुनिरुवाच।

ईश्वरो विहरति स्वमायया ज्ञातया वत वशीकृता इमे।
पीतसीधुरिव सापरापरौ बन्धयत्यपि विमोहयत्यपि ॥ १६८
प्रातिबिम्बपुरुषो हि तद्वशः स्वप्नजागरसुषुप्तियोगतः।
तत्कृतेन विधिना स्वयं कृतं दुष्कृतं स्वसुकृतं समश्नुते ॥ १६९
भक्तिभावरसतः प्रसाद्य तं शङ्करं स तनुरेष किङ्करः।
तद्गतिं समनुसृत्य मुच्यते तत्कृपात इति तत्प्रयोजनम् ॥ १७०

कुमारावूचतुः।

केचिच्च जीवबाहुल्यं केचिदेकं वदन्ति हि।
किं तथ्यं किं समाख्या हीत्युक्तस्ताववदन्मुनिः ॥ १७१
एक एव हि भूतात्मा नानोपाधिषु दृश्यते।
बहुधैवाम्बुपात्रेषु चन्द्रमः प्रतिबिम्बवत् ॥ १७२
चिदात्मैको जगद्योनिः शक्तिरेका तदात्मिका।
सा त्वस्य कारणोपाधिः सदसद्भ्य अजाभूः ॥ १७३
व्रजेत्परिणतिं सापि महदादिक्रमेण च।
तदुपाधौ पराशक्तिरक्रमा परिणामिनी ॥ १७४
व्यापिका जीवयत्येनाश्चित्प्रभा सा विवर्त्तते।
सापि मायादिशब्देन शक्तिराद्या निगद्यते ॥ १७५

यस्या अवयवोऽनन्तब्रह्माण्डं परमाणुवत् ।
अगृहीत्वा परां शक्तिमपरेषां प्रवर्त्तते ॥ १७६
उत्तिष्ठति गृहीत्वैव सलिलं वीचिमालिका ।
भावनाभावकान्तःस्था तद्वत्रैव प्रकाशते ॥ १७७
एकः साक्षी परात्मासौ बुद्धौ स्यात् प्रतिबिम्बिता ।
अस्य नानात्वमिच्छन्ति बुद्धिभेदादतद्विदः ॥ १७८
एकस्या एव हि मृदो बहवः स्युर्घटादयः ।
एकस्याग्नेः प्रदीपाश्च नानारूपा भवन्ति हि ॥ १७९
नानान्तःकरणोपाधौ स्फुरदर्थः-प्रभाकवत् ।
नानेव भाति चिच्छाया जीवरूपा जगन्मयी ॥ १८०
यथा गवाक्षजालान्तराकाशोभात्यनेकधा ।
परस्परं प्रपश्यन्ति वाग्भिर्व्यवहरन्ति च ॥ १८१
महारज्जुं ग्रन्थिजालनिबद्धखगराजिवत् ।
प्रत्येकाहंग्रन्थिभेदेन पृथक् मुक्ता भवन्ति हि ॥ १८२
प्रज्ञात्या प्रथमं भागमाश्रितो निर्मलः पुमान् ।
सर्वज्ञः सर्वशक्तीशः कटाक्षैर्जगदीक्षितः ॥ १८३
अतोऽस्य मायावरणमावच्छेदो न बन्धनः ।
न मायामायिनं शुद्धं न सूर्यं मेघखण्डिका ॥ १८४
तज्ज्ञत्वात् महत्त्वाच्च नालमावरितुं क्षमा ।
जीवपञ्जरभूतयन्तत्पदार्थविभूषणम् ॥ १८५
मायी स माययात्मानं कर्त्तुमहत्यनेकधा ।
योगीव योगजां सिद्धिमाश्रित्य मुहुरेकदा ॥ १८६
बुद्ध्यादीन् जीवयन्ती सा चिच्छायोक्ता पुरा तु या ।
सा जीवो मलिनोपाधिर्वेत्त इत्यभिधीयते ॥ १८७

अजो मृतोऽपि देहेन जायते म्रियतेऽपि च।
अनादिमन्धत्वेऽयं स तु प्रागादिमुच्यते ॥ १८८
दृश्यप्रदर्शनदृष्टितभावेषु प्रोक्ततेष्विह।
अनुस्यूतां चिदेवात्मा तेनैकात्मेति निश्चयः ॥ १८९
एवं परापरमथो शक्तिरेषा परात्मनः।
अचिन्त्यानन्तसामर्थ्या यया ततमिदं जगत् ॥ १९०
अन्तःकरणमप्येकमेको जीवोऽपि तत्स्थितः।
स्वप्नद्रष्टेव जीवोऽसौ कल्पयेच्चेश्वरं जगत् ॥ १९१
प्रौढतादेश वदन्त्येवं तेन्मतमाति रोचते।
किञ्चिज्ज्ञः परतन्त्रोऽसौ जगद्वा कथमीश्वरम् ॥ १९२
जीवः सृजति चेच्छक्तिर्निद्रायाः प्रोच्यते तदा।
वयं ब्रूमोत्र तां शक्तिं मायाख्यां परमेशितुः ॥ १९३
दूषणं बहुधा वक्ष्ये काहङ्कारेवादिनाम्।
श्रोतव्याश्च को जीवो विरोधेऽनुभवस्य तत् ॥ १९४
द्वितीय विरहादात्म वाक्यादेरप्यनिर्णयः।
नादयापि ज्ञातं कैवल्यं मानं किं वास्ति भाति चेत् ॥ १९५
निद्रावदास्यतीत्येषा काप्रत्याग्यात्समेधमाम्।
स्वप्न एवात्र दृष्टान्तः प्रमाणीक्रियते यदि ॥ १९६
तस्तद्दृष्टो हि शास्त्रार्थः प्रमाणीक्रियते न किम्।
किमनेन विचारेण चित्तविक्षेपयोगिना ॥ १९७
सिद्धः सिद्धिं [illegible] [illegible] [illegible]।
ततः [illegible] [illegible] [illegible] [illegible] प्रत्यब्रवीत् ॥ १९८
[illegible] [illegible] [illegible] [illegible]
समुच्चयोत्र वृथा नाम वृक्षाना किमेव हि ॥ १९९

आद्या ज्ञानमयी सापि द्विधा शब्दविवेकजा।
परोक्षा सापरोक्षेति परोक्षा शास्त्रनिश्चयात् ॥ ५००
अपरोक्षा विवेकेन स्वयं ब्रह्मेति निश्चयः।
संसारयति कर्म्माणि यस्याः सिद्धौ न पूरुषम् ॥ १

उक्तञ्च।

शास्त्रेण नश्येत्परमार्थरूपा कार्य्यक्षमा नश्यति चापरोक्षात्।
प्रारब्धनाशात् प्रतिभासनाश एवं त्रिधा नश्यति चात्ममाया ॥ २

संसारभयसंविग्नो मुमुक्षुर्दृढ़निश्चयः।
ज्ञानाधिकारी भवति सद्गुरोः सम्प्रसादतः ॥ ३
शान्तिदान्त्यादिसम्पन्नो यमवान्नियमान्वितः।
विकृतिं प्रकृतिं ज्ञात्वा मूलप्रकृति मेव च ॥ ४
गुणांश्च प्राकृतान्मत्वा संसारं तदुपाश्रयम्।
उदासीनवदासीन मात्मानं तमसः परम् ॥ ५
विवेकात् केवलीभूतः स्वविवेकैकसाधनः।
भवेदनन्यहृदय इत्येवं साङ्ख्यनिश्चयः॥ ६
अतुष्टो नित्यसन्तुष्टो निःसङ्गः साधुसङ्गवान्।
सिद्ध्यष्टकेन सम्पन्नोप्यष्टसिद्धो गतस्पृहः ॥ ७
साधयेत्सिद्धमात्मानं योगी योगं समाचरन्।
ज्ञानसिद्धौ तदा ज्ञानशक्तिरित्थं तमोमयी ॥ ८
जागरे स्वप्नविभ्रान्तिरिव याति विलीनताम्।
प्रकृतिं न स गृह्णाति पुनर्दृष्टा मिव स्त्रियम् ॥ ९
नायाति सापि तत्पार्श्वं परित्यागेन लज्जिता।
अस्ति नास्तीत्यविज्ञाता लीयते नेक्षते पुनः ॥ १०
कामबन्धः कर्म्मबन्धो ज्ञानबन्धस्त्रिधा भवेत्।

जन्ममृत्युजरारोगशोकमोहादि दोषदृक् ॥ ११
सङ्कल्पवर्जनात्पूर्वं कामबन्धाद्विमुच्यति ।
सर्व्वकर्म्मार्पणं कृत्वा भक्त्यादौ परमेश्वरे ॥ १२
कर्म्मबन्धात् प्रमुच्येत निष्कर्म्मपदमाश्रितः ।
आत्मानमक्रियं पूर्णं मद्वितीय मनामयम् ॥ १३
दृष्ट्वा विमुच्यते योगादनाद्यज्ञानबन्धनात् ।
यथा यथा त्यजेत् कामं तथा रामेण पूर्य्यते ॥ १४
यथा यथा त्यजेत्कर्म्म निर्भयः स्यात्तथा तथा ।
यथा यथा ह्यकर्त्तारमात्मानं परिपश्यति ॥ १५
तथा तथा कर्म्मबन्धश्लथो मोक्षाय जायते ।
यथा यथा ज्ञानवृद्धिः शोकहानिस्तथा तथा ॥ १६
यथा यथोदेति भास्वांस्तमो नश्येत्तथा तथा ।
प्रतीत्यर्थमिदं किञ्चिज् ज्ञानिनान्ते मयोदितम् ॥ १७
सम्प्रत्तिवक्ष्यमाणस्य चित्तस्यैकान्तरोधतः ।
द्रष्टुः स्वरूपावस्थानं योगानां सिद्धिसाधनैः ॥ १८
योगिनां संयमबलाज्जायन्ते पूर्व्वसिद्धयः ।
श्रावणप्रातिभाद्याश्च तेऽपि संसिद्धिविघ्नदाः ॥ १९

ज्ञानं तुल्यं संयमाद्याश्च तुल्याः साङ्ख्ये योगे तुल्यमन्ते फलञ्च ।
आद्ये ज्ञानस्याश्रयाच्चित्तरोधो रोधाज् ज्ञानलाभः परत्र ॥ २०
नैरन्तर्य्याद्दीर्घकालाच्च सम्यक् सत्काराात् संसेवितौ बद्धमूलौ ।
तौ जायेतां सांख्ययोगौ प्रसिद्धौ वैराग्याच्चाभ्यासतो लब्धलक्ष्यौ ॥२१

तत्रापि उत्तमाधिकारिणां विवेक एकः साधनम् । आसन-प्राणसंयम-प्रत्याहार-ध्यानधारणा-समाधयो मध्यमानाम् । अवराणाञ्चेतःशुद्धार्थं स्वाध्याय-तप-स्त्याग-यज्ञादयः । तत्र पाठो

मोक्षाध्ययनं, नियताहारस्तपः करणरोधो वा, त्यागः सन्यासाख्यः, यज्ञो द्रव्यार्पणं देवे ।

गीतायाम्—"द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथा परे ।
स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः ॥" २२

मोक्षे—अपरे च महायज्ञं मनस्येव वितन्वते ।

तथाहि—"ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणाहुतम् ।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥"२३
इत्यादि भगवद्वाक्यैश्च ।

एवन्तत्तत्क्रियां कुर्व्वन् यज्ञं विष्णुमुपासते ।
यज्ञभावनया तत्तद्द्रव्यभावसमर्पणैः ॥ २४
एवं यज्ञधिया सर्व्वं योऽनुष्ठाय समश्नुते ।
स यज्ञशेषामृतभुक् तिष्ठति सं स्मर्य्यते ततः ॥२५
न यजेद्यस्तु सम्पत्तौ न दत्तेनाश्नुते परैः ।
वसुरक्षः स यक्षो हि भाजनं पापतापयोः ॥ २६

यज्वा गर्व्वी दानशीलः कुपात्रे भोक्तान्यार्यैर्द्वेषरागात्तपस्वी ।
जेतुं ज्ञानी चापरानर्थहेतोः स्वाध्यायार्थी सर्व्व एतेऽर्थहीनाः ॥२७
त्यक्ता भोगांस्तान् पुनर्याचमाना हित्वा चार्थम् हन्त ! तन्वर्थसक्ताः ।
ज्ञात्वा ज्ञेयं ये ममत्वेन मूढास्ते नाभासा एव विज्ञावभासाः ॥२८

जात्याश्रमादिधर्म्मैण केऽपि भक्तार्चयन्ति तम् ।
जात्याश्रमाचारवता पुरुषेण परः पुमान् ॥२९
विष्णुराराध्यते तावदित्यादिस्मृतिदर्शनात् ।
अन्येऽपि तं यजन्त्येव स्वस्वभावक्रियार्पणैः ॥ ३०
वैधावैधैस्तदुद्देशात् तदधीनक्रिया धियाः ।
यत् करोषि यदश्नासि चेत्यादि श्रवणादनु ॥ ३१

शुभाशुभफलैरेवं मोक्ष्यसे कर्म्मबन्धनात्।
इत्यादि भगवद्वाक्यमालम्ब्य प्रयतन्ति हि ॥ ३२

मायैव कर्त्र्यथ महेश्वर एव कर्त्ता
तत्प्रेरितोऽहमिति वा वसताभिमानात्।
यद्यत्त्वकामकृतमीशसमर्पितं वा
ज्ञात्वा सकाममनसास्य कृते कृतं वा ॥ ३३

तत्सर्व्वमेव हि न बन्धकृते हि कर्म्म-
कुर्य्याद्यथामति तथा फलमश्नुते च।
तस्माद्विहाय मनसा खलु काममेकं
कर्म्मार्पणं कुरु चराचरलोककर्त्रे ॥ ३४

राजधर्मे युधिष्ठिरं प्रति व्यासोक्तिः—

ईश्वरो वा भवेत्कर्त्ता पुरुषो वा कथञ्चन।
हठो वा विद्यते लोक इत्यादि स्मरणादनु ॥ ३५
यथा हि पुरुषः छिन्द्याद्वृक्षं परशुना किल।
कर्त्तुरेव भवेत्पापं परशोर्न कदाचन ॥ ३६
एवं सर्व्वाणि कर्म्माणि ईश्वरे सन्निवेशय।
अथवा ते घृणा काचित्प्रायश्चित्तं चरिष्यसि ॥ ३७

कूर्म्मपुराणे—

ज्ञानतोऽज्ञानतो वापि यत् किञ्चित् कुरुते नरः।
तत्सर्वं भगवानेव कुरुते योगमायया ॥ ३८
नाहं कर्त्ता सर्व्वमेव ब्रह्मैव कुरुते तथा।
एतद्ब्रह्मार्पणं प्रोक्तं ऋषिभिस्तत्त्वदर्शिभिः ॥ ३९

(गीतायां ब्रह्मार्पणं ब्रह्महविरित्यादि)

मदर्थमपि कर्म्माणि कुर्व्वन् सिद्धिमवाप्स्यसि।

तथा—अधिष्ठानं तथा कर्त्ता कारणञ्च पृथग्विधम्।
तथैव विविधाश्चेष्टा दैवं चैवात्र पञ्चमम्॥ ४०
इत्येवं सति कर्त्तारमात्मानं केवलन्तु यः।
मन्यते कृतबुद्धित्वां न स पश्यति दुर्म्मतिः॥ ४१

इदानीं योगो निरूप्यते। 'योगश्चित्तवृत्तिनिरोध'—इति अन्यत्र स्मर्य्यते। मन्त्रयोग इत्यादिपञ्चविधः।

मन्त्रार्थादेश्चिन्तयाद्योथमूर्छ्ं प्राणायामस्पर्शतस्तद्विनैतत्।
भावालम्बो शून्यवद्भावशून्यात्ब्रह्मात्मैक्यादीश्वरः पूर्णयोगः॥ ४२

इत्यादयश्चित्तवृत्तिनिरोधनायैव।

चित्तं ज्ञानं वृत्तयस्तन्निरोधो विघ्नाविघ्नोत्पादनं शिद्वयश्च।
तत्त्वज्ञानं निर्विकल्पं समाधिः सङ्क्षेपात्ते प्रोच्यते भूय एवम्॥ ४३
चेतः सत्व त्रिगुणं ज्ञानचेष्टास्तथाकारं निर्म्मलज्ञानमात्रम्।
ध्याना यस्मात्रया चान्ययोगस्तच्चित्राकारं चित्रभोगाय योग्यं॥४४

योगः प्रोक्तश्चित्तवृत्तेर्निरोध-
श्चित्तस्योक्ता वृत्तयः पञ्चतय्यः।
क्लिष्टाः क्लिष्टास्तेन चैता द्विधा स्यु-
स्ताः संरुन्ध्यात् स्वे कृतैकाग्रभूमिः॥ ४५
क्षिप्ता मूढ़ा तात! विक्षिप्तसंज्ञा
सर्व्वेषां स्याच्चित्तभूमिर्य्यतेस्तु।
एकाग्रादौ सन्निरुद्धा ततः स्यात्
सिद्धासिद्धैस्ताः पुरोक्ता निरोध्याः॥ ४६

प्रमाणनिद्रास्मृतयो विकल्पविपर्य्ययौ पञ्च तु चित्तवृत्तयः।
एकात्मवृत्तिश्चितिशक्तिरात्मा सा संक्रमा वा परिणामिनी च॥४७
एका.गार्थश्चेतसस्तानि तानि प्रोक्तानुरक्तैः परिकर्म्माणि तज्ज्ञैः।

मैत्री मुदिते मुदितापुण्ये कृपणे कृपैव सम्भाव्या ॥ ४८
कार्य्यापेक्षोपेक्षितधर्म्मे परिकर्म्म निर्द्दिष्टम्।
एकार्थं चाभ्यसेदेकतत्त्वमीशं वान्यं देवमीष्टं तदर्थम् ॥ ४९
प्राणायामं कोऽपि चारत्नचित्ते सुप्तिस्वप्नाकारविज्ञानमेके।
चेतः सत्वं निर्म्मलं निस्तरङ्गं निःशोकञ्च स्वान्तरालम्बयन्ति॥५०
भूयः सम्यक् चित्तवृत्तेर्निरोधाद्दायात्यन्तः प्राक् सबीजः समाधिः।
स्थूलं सूक्ष्मं ग्राह्यमालम्ब्य च द्वौ भातस्त्वन्यौ तद्ग्रहं ग्राहकञ्च॥५१
ग्राह्यो विषयः सत्वं ग्रह इति तद्ग्राहकः स्वयन्तेन।
सवितर्कः सविचारः सानन्दः सास्मितश्चतुर्द्धातः ॥ ५२
शेषाऽशेषैर्बीजैरहितः संस्कारशेषरूपो हि।
सम्यक् त्यक्तालम्बो दृष्टद्रष्टुः स्वरूपश्च ॥ ५३
नित्या शुद्धा चान्यथा भावहीना मुक्तानन्ता संक्रमा दर्शितान्या।
या चिच्छक्तिः सा पुमान् सैव पूर्णानन्दज्योतिर्द्रष्टुरात्मा स्वरूपः॥५४
तद्रूपत्वेन स्थितिमुक्तिरुक्ता नो चेच्चित्तं दृश्यसारूप्यमेति।
योगी कुर्य्यादासनस्थैर्य्यमादौ प्राणायामानभ्यसेदात्मशुद्ध्यै ॥ ५५
प्रत्याहृत्य वात्मनाह्यात्मचित्तं योगात्सम्यग् धारयेद्देशबन्धम्।
पिण्डीकृत्य स्वेन्द्रियग्राममादौ ध्यायेत् किञ्चिन्नैव चात्मानमेकं॥५६
शब्दद्योत्यं वा स्वहृद्व्यासविन्दं ध्यायेद्वा तं पूर्णमात्मानमीशम्।
भूतानिभौतानि च तानितावत्तन्मात्रमात्राणि च तानिसौक्ष्म्यात्॥५७
स्वचित्तसत्वं तदिहात्ममाया भ्रान्तिस्तु सात्मैव विभाति चास्ति
स ज्ञानरूपो विमलो द्वितीयो भ्रान्त्यार्थवज्ज्ञाति च तत्र सर्व्वम् ॥५८
भ्रान्तिश्च्युता स्वस्थितिरेव सिद्धा समाधिरानन्दमयी प्रसिद्धा।
ध्याता जीवो ध्येय आत्मा विशुद्धो ध्यानं चित्तं स्मृतिमच्चोपलब्धौ॥५९
ध्यातुर्ध्यानस्या स्मृतौ स्यात्समाधिस्तस्मान्नाभ्युत्थानमेवात्र सिद्धिः।

मरुता च मनो निरोधयेद्विनिरुध्येन च तेनवाथ तम् ॥ ६०
उभयोर्विनिरुद्धयोर्लयो लयतो स्यादलयो हि योगिनाम् ।
अज्ञात्वान्तःपुरुषं नित्यमुक्तं शुद्धं बुद्धं यो लयं याति योगैः ॥ ६१
अज्ञो रागात् पुनरावर्त्तते हि तस्माज् ज्ञात्वा ध्यानयोगाय भूयात् ।
तन्ते भूयः पुरुषं सं ब्रवीमि यस्मादेते पुरुषाः सं प्रवृत्ताः ॥ ६२
यस्मिन् भूयो लीनतां यान्ति तत्त्व ज्ञानाभ्यासाद्योगिनःस्तु मायाःच ।
आत्मा हि देहस्य किलेन्द्रियाणि तेषां मनस्तस्य च धीर्धियश्च॥६३
पुमांस्तु पुंसस्तमसः परस्तात्पूर्णाचिदेका परमः किलात्मा ।
क्षेत्रेषु सर्व्वेषु च यो विशेषः क्षेत्रज्ञ एकांशितया विभाति ॥ ६४
यो भ्रामयत्येव जगत्समग्रं स्वमायया यो जगदेकसाक्षी ।
समस्तरूपोऽपि च रूपहीनो जगन्निवासो जगदन्तकश्च ॥ ६५
जगद्विधातार्च्चिरपप्रकाशो जगत्स्वरूपोऽपि जगन्नचायम् ।
विशुद्धबोधाकृतिरेष पूर्णो ज्ञानं तदेकात्ममतिं प्रतीहि ॥ ६६
तस्मात् प्राज्ञो देशिकादीशतत्त्वं ज्ञात्वा शेषं प्रतिसङ्ख्याय साङ्ख्यः ।
सङ्ख्यातीतं सङ्ख्ययासङ्ख्यया वा ध्याये देवं द्रष्टुरात्मानमेव ॥ ६७ ।

दृष्ट्वा दृष्ट्वा वैषयान्दोषजातान्
प्रत्यावृत्य प्रत्यगात्मैकदृष्टिः ।
कान्तेकान्ते स्वासने स्वासनस्थः
स्वस्थं सुस्थश्चिन्तयन् स्वस्थितः स्यात् ॥ ६८

दृष्ट्वा दृष्ट्वा व्यक्तपर्य्यन्तमादौ भूतग्रामं सेन्द्रियैः स्वैर्गुणैस्तैः ।
मायां दृष्ट्वा तद्गुणान्निर्गुणं स्वं भावं पश्य भावयेन्नैव किञ्चित् ॥६९
श्रोत्रादीन् स्वान् स्वाश्रये निवर्त्त्य प्रत्यक्चित्ते चित्तमावेश्य सम्यक्
ध्याये देवं प्रत्यगात्मानमेके प्रत्यावृत्तः स्याद्यथा नैव भूयः ॥ ७०
ओंकारार्थं चिन्तयन् वा तमेकमीं तं सानुज्ञाचनुज्ञास्वरूपम् ।

निःशब्दं वा निर्गुणं निर्विकल्पं योगी योगाद्भावयेन्निर्विकल्पः॥७१
आकाशाभं सुप्रकाशस्वरूपं बुद्धेर्बोधाकारमाकारहीनम्।
सूक्ष्मात् सूक्ष्मं तं महान्तं महद्भ्यः शुद्धं बुद्धं नित्यमुक्तस्वभावम्॥७२
शब्दस्पर्शैरूपगन्धैश्च हीनं चिन्ताहन्तासंशयाद्यैर्विहीनम्।
हीनं सर्वैरिन्द्रियैरिन्द्रियार्थैर्ध्यायेद्योगी तच्चिदाकाशमेव॥७३

अथवा बहिःसमाधौ।

सर्व्वाधारं चाप्यनाधारमेकं सर्व्वाकारेष्वन्वितं निर्विकारम्।
सर्व्वाकारं शक्तिहस्त्या दधानं सर्व्वास्यं तं सर्व्वतः पाणिपादम्॥७४
सर्व्वान्तःस्थं सर्व्वतः श्रोत्रनेत्रं सर्व्वं दृष्ट्वा सर्व्वभावातिगः स्यात्।
जन्म जन्म निश्चयैर्ध्यानयुक् स्याद्ध्यानात् स्वस्वस्तज्जपेच्चेतसैव॥७५
भूयो भूयश्चैव मभ्यासयोगान्निःसन्दिग्धं सिध्यतेऽन्तः परात्मा।
एवं योगाद्यात्यविद्याविनाशं तस्या नाशे संशया यान्ति नाशम्॥७६
निःसन्दिग्धे नित्यमुक्तस्वभावे निःसन्दिग्धा स्वस्वरूपस्थितिः स्यात्
एतज्ज्ञानं ध्यानमेतद्विशुद्धं भक्तिश्चैषा भावनाख्या लयश्च॥७७
एतद्बुध्वा बुद्धिमान् बुद्ध्यमानो बुद्धः शुद्धो रुद्धचित्तश्च भूयात्।
एकं बीजं चित्तवृक्षस्य मन्ये प्राणस्पन्दो वासनाद्वस्वरूपः॥७८
तस्यकांशेनाशिते हन्त! चाद्यं छिन्नाङ्कुरत्वान्न प्ररोहन्ति भूयः।
दृष्ट्वाहन्तां नित्यतां सर्व्वभावे नित्यानन्दज्ञानतामात्मनश्च॥७९
निःसङ्गः स्यादस्थिरैः सर्व्वभावैरङ्गैर्हीनन्नाशयंश्चित्तबीजम्।
स्यान्नृपनिमन्त्रणेऽपि स्मयसङ्गौ पुनरनिष्टहेतुः स्यात्॥८०

तद्वैराग्यं सुदृढ़ं गृह्णीयाद्भावयन् स्रुतेर्दोषम्।
सप्ताब्धमण्डलान्तः संयमतः सप्तलोकिकालोकः॥८१
मूर्द्ध्नि ज्योतिषि भवति दर्शनमिह सिद्धपुरुषाणाम्।
एते चान्या बहवः सिद्धय इह विघ्नकारिणः॥८२

तासु च काश्चित्तज्ज्ञावुपयोगिन्यः प्रदर्श्यन्ते—

सत्त्वविविक्ते पुरुषे संयमतस्त्वात्मविज्ञानम्।

संयमतोऽवच्छिन्ने निरवच्छिन्नात्मविज्ञानम्॥ ८३

संयमतस्तारात्तारकविज्ञानमैश्वरं लभते।

येन यथावन्निखिलं प्रत्येकसमुच्चयाभ्यास्त्र॥ ८४

करतलगतवद्भोत्स्यति तद्विद्धि तारकं ज्ञानम्।

सत्त्वस्य च पुरुषस्य च विशुद्धि साम्येऽत्र कैवल्यम्॥ ८५

सन्त्यप्यन्ये ध्यानिनां ध्यानयोगा मन्त्रे देवे किञ्चिदालम्बने वा।

तेनैतस्य ध्यानयोगस्य योग्याः कालैः प्राप्तं तत्कलां षोड़शीं वा॥८६

प्राणायामा मात्रया द्वादश स्यात्प्रत्याहारो द्वादश प्राणरोधः।

एवं वृद्ध्या धारणाध्यानयोगाद्योगाभ्यासे कालसङ्ख्योपदिष्टाः॥८७

या या भूमिः प्राप्यतेऽभ्यासयोगात्तान्तां जित्वैतोर्द्ध्वगो नावरोहेत।

भ्रष्टं भ्रष्टं स्थापयेद्यत्नतोऽन्तः साम्यं प्राप्तश्चालयेन्नैव विद्वान्॥ ८८

उद्विग्नः स्यान्नैव युञ्जन् कदापि कालैः सर्वं सिध्यते बुद्धिभाजाम्।

क्रोशैः क्रोशैर्याति गच्छन् सुदूरं देशन्तिष्ठत्येव तिष्ठन् सुमन्दः॥८९

युक्ताहारो युक्तचेष्टा विहारो युक्तस्वापस्तात! युक्तानुलापः।

युक्तासीनो युक्तचित्तश्च भूयाद्योगी नित्येनात्मना नित्ययुक्तः॥ ९०

वैराग्ये चात्युत्तमेण क्रमेण हित्वा वाह्यां भावनामर्थहीनाम्।

सं प्राप्तार्थो दोषदर्शी विमर्शी नैवानर्थैः स्यात् प्रवृत्तः परार्थे॥९१

प्रातः सायं मध्यरात्रौ निशान्ते युञ्जन् योगी षड्भिरेवेह मासैः।

योगारूढो जायते जायते च योगारूढः सर्वथा नित्ययुक्तः॥ ९२

आसीनो वा पर्यटन्वा शयानो स्वस्थः सुस्थः सर्वदा स्यात्सुयुक्तः।

कामद्वेषाद्यैश्च भूयाद्विमुक्तो योगानन्दी भावयन् सर्वबीजम्॥९३

सोपानेन क्ष्वेडपूर्णां गृहीत्वा पात्रीं कश्चित्सोऽङ्गमारोहतीह।

तद्दयोगसंग्रहयुक् चित्तपात्रं धृत्वा योगी योगमारोहतीह ॥ ९४
शास्त्रज्ञानाच्चानुमानाच्च सूक्ष्माद्ध्यानाभ्यासानन्दतश्चापि शश्वत्।
प्रज्ञां प्राज्ञो वर्द्धयन्नेति योगं यः सम्बन्धं नास्ति लभ्यश्च नित्यमत्र ॥९५
प्रणवार्थविचिन्तनं पुरा गदितवान् स समाधिसिद्धये।
अधुना ध्वनिभावनोच्यते द्वितयी सिद्धिरिहाप्यते यया ॥ ९६
अथवा परदेशबन्धनात् परिमुक्तामविमुक्तसंश्रयाम्।
कुरु वृत्तिमतो मनोमयीं तनुपातावधि तत्र संस्थितः ॥ ९७
ध्वनिरूपधरां श्रुतिशब्दाहिदितां सर्व्वगिरां भवश्चलीम्।
शिवधामगतां शिवां परां कुरु चेतःस्थितये स्थितिप्रियाम्॥ ९८
अथ सप्तसु विश्वधामसु स्थितचैतन्यतनुस्तमीयसीम्।
शुचिसूरशशाङ्कसङ्कजित्प्रभया व्याप्तजगद्दरीं स्मरेत्॥ ९९
परशक्तिमथात्मदर्शिनीं स्फुरदाज्ञाह्वय चक्रमूर्द्धगाम्।
कलिकेन्दुकिरीटमण्डितां गुणवर्णद्युतिदेहसुन्दरीम्॥ १००
त्रिविधग्रन्थित्रिभेदनोत्थितां परशक्तिं परचित्प्रभामयीम्।
परपद्मधामतः परे परमब्रह्ममयीं विचिन्तयेत् ॥ १
इयमच्युतपद्मभूभवोद्भवहेतुर्जगदेककारणम्।
इयमेव शिवस्वरूपिणीं शिवदाभेददृशां परायणा ॥ २
अथ कुण्डलिकुण्डलाकृतिं कुलकुण्डात् प्रतिबोध्य कुण्डलीम्।
कृतकुण्डलिकुण्डलालये गमनायाभिमुखीं विचिन्तयेत्॥ ३
आकर्षयन्ती विषयान्मनांसि जगज्जनानां विहृताङ्कुशामिव।
विमोचयन्तीं पशुपाशतः स्वतो दयार्द्रचित्तां जननीमिव स्वाम्॥४
सम्मोहयन्तीमिव मन्मथेषुर्मनः परप्रेमरसेन धूर्जटेः।
संस्तम्भयन्तीमिव सूक्ष्मभेदतः सुसिद्धशिष्यां दृढधन्विनीमिव ॥ ५
विनाशयन्तीं स्फुरदन्तरं तमश्चित्रज्ञास्करामां प्रथमोदितामिव।

स्वसत्वसम्बन्धवशाद्द्रवन्तीमिव प्रियप्रेमरसेन विह्वलाम्॥ ६
प्रोज्झन्तीं पतिकामतः स्वनिलयान्येकान्तभावामिव,
यान्तीं चान्तरनन्यवीक्षितपथा कौलाङ्गनायामिव।
स्वस्वीयाद्यविलोकनां स्मरणतः कान्तादनन्यामिव,
आलीनामपि वारणेन विजनां व्रीडोपगूढ़ामिव॥ ७
हृदग्रन्थ्यग्रकपाटजालमचिरादुद्घाटयन्तीं बला—,
च्छिन्दन्तीं खलु संशयांश्चपहरन्तीमन्यकर्म्माण्यपि।
तद्भावैकनिमग्नमानसतयानन्यां प्रियेणात्मना,
ध्यायेत्तां परदेवतां परतरानन्दात्मभूतः स्वयम्॥ ८
निजवोढ़ारमनुव्रतां नवोढ़ां गुणगूढ़ां प्रियसङ्गमादमूढ़ाम्।
परमेण शिवात्मनोपगूढ़ां स्वपदारूढ़तनुं विचिन्तयेत्ताम्॥ ९
तां शब्दोत्थचिदम्बुसम्भवमुखीमज्ञानपृष्ठान्वितां,
नित्यानित्यविवेकनेत्रयुगलामद्वैतभालेक्षणाम्।
वर्णैश्चित्रतरैर्विचित्रिततनुं निःशेषवाक्याश्रयिणीं,
मोक्षस्वर्गपयोधरस्रुतरसैः सन्तर्पयन्तीं स्वजान्॥ १०
द्वैताद्वैतपदद्वयां हरिहरब्रह्मात्मभक्तस्तुता,
चित् सेरां स्वरकण्ठिकां बहुतरालङ्कारसालङ्कृताम्।
श्रेयोजाप्यपराभृताभयवरां सच्छास्त्रमुद्राधरां,
स्फूर्जन्नादकिरीटिनीं भगवतीमोङ्कारमूर्त्तिं स्मरेत्॥ ११
स्नात्वा निर्म्मलभाववारिसकलान् सन्तर्प्य दौवारिकान्,
दान्तिक्षान्त्युपशान्त्यरागसततावासान् समभ्यर्च्य च।
छित्वा भेदकपाटमन्तरचलज्ज्ञानात्मरत्नालयम्,
संविश्य स्थिरतासनस्थिरमतिः प्राणान् स्थिरं धारयन्॥ १२
स्वस्मिन् यस्य जगच्च तन्मयधिया ध्यायेत्परां देवतां,

सर्व्वज्ञादिभिरात्मशक्तिभिरवामाङ्गीमनङ्गार्च्चिताम् ।
गन्धाद्यैर्विषयैर्धियोप्यविषयामभ्यर्च्य चित्तार्पितैः,
भूयस्तां समसाम्यबोधकुसुमैर्योगीसमभ्यर्चयेत् ॥ १३
विद्या माया यागमहःस्थली स परमश्चात्मा परा देवता,
धीतिद्वयोपशान्तिसततभ्यासास्पृहा ऋत्विजः ।
ध्यानाज्यं सुमनः स्रुचा पशुरहङ्कारोथ दीक्षैकता,
ज्ञानाग्निर्धृतिराहुतिर्भवतु ते यागः स्वलोकप्रदः ॥ १४
प्राणानले वाच मथो यमाग्नौ मनःसु सङ्कल्प तथैव कामम् ।
शान्त्यग्निवक्त्रे जुहुयाद्यतीन्द्रो यज्ञा यतीनामिम एव मुख्याः॥१५
ब्रह्मण्यन्तर्निःप्रपञ्चे प्रपञ्चं
तज्जं तत्स्थं तल्लयं प्राग्विदित्वा ।
हुत्वा योगी विन्दति ब्रह्मयज्ञं
यं लब्ध्वा स्याद् ब्रह्म साक्षान्न चित्तम् ॥ १६
अथ संविदमेव केवलां परिपूर्णां परितो विभावयन् ।
परदृष्टि पराङ्मुखीं सतीं मननोल्लासलयेन पूजयेत् ॥ १७
अथवापि चिदेकवाचकैर्वचनैस्तां वचसां परां शिवाम् ।
प्रयजन् प्रविहाय तद्वचः सविवेकं प्रयजेत्तदर्थगाम् ॥ १८
अथवा निजशक्तिविग्रहे निजभक्ताग्रहकृतचित्तविग्रहे ।
दधति स्म सतामनुग्रहे परमानन्दचिदन्यसङ्ग्रहे ॥ १९
मतिमार्त्तिचयं यदृच्छया विधिलब्धेन्द्रियभोगसञ्चयम् ।
अपराधचयानि भीतवत्कृतधीस्तत्र समर्पयन् हृदा ॥ २०
सुहृदं हृदि संशयच्छिदं निखिलज्ञानदयोदयस्थलम् ।
परदं परबोधलब्धये गुरुमात्मानमधीश्वरं श्रयेत् ॥ २१
महतां महदर्थसिद्धये महदादिक्रमवर्ज्जनादपि ।

सगुणैरगुणोऽपि लीलया कुरुते विष्णुशिवादिविग्रहम् ॥ २२
सितहृच्छितगोत्वगासनः सितरश्मिः शितरश्मिभूषणः ।
सितिकान्तरुचाश्रिताङ्कया शितिकण्ठः शरणं सहोमया ॥ २३
असितां सितसत्त्वसम्पदां स्वपदस्थां विपदब्धितारिणीम् ।
असमां सुषमामयीं प्रभोरगुणां वा गुणरूपिणीं स्मरेत् ॥ २४
स्वदृशा क्षतकामनिग्रहं सुदृशाङ्गीकृतचारुविग्रहम् ।
विमलं खमिवापरिग्रहं विदन्तं जगतामनुग्रहम् ॥ २५
त्रिदृशं त्रिदशेश्वरार्चितं त्रिदशारातिहरार्द्धदेहिनम् ।
त्रिदशद्वादशतत्त्वतोऽधिकं त्रिदशातीतमनन्तं तमाश्रये ॥ २६
अथवा । चलचक्रगदाजशङ्खभृच्चतुरत्युज्ज्वलबाहुसुन्दरम् ।
चलितभ्रूभ्रमितामरद्विषं चतुरं चारुविचित्रभूषणम् ॥ २७
चलदञ्चलचेलचञ्चलाचलदम्भोधरचारुमच्युतम् ।
चरणद्वितयानुचारिणीचपलाचालितचारुचामरम् ॥ २८
चतुरङ्गचरं सदाचरं चतुराम्नायचतुर्मुखस्तुतम् ।
कुरु लोचनगोचरं हरिं चलचेतश्चतुरोऽसि चेद्यदि ॥ २९
इति रूपे विनिवेश्य मानसं मनसा तत्करणाभिकांक्षया ।
सततध्यानपरेण भावयेत् सकलं चापदि निष्कलं परम् ॥ ३०
सकलोत्तारकपारसाश्रयं सकलं सकलात्मशक्तिपम् ।
परिपूर्णं परिचिन्त्य पूर्णदृक् परिमुच्येत पराक् प्रसङ्गतः ॥ ३१
एवं शुद्धे निरुद्धेऽन्तः प्रत्यक्चित्ते परात्मनि ।
योगः स्वानुभवस्यात ! जायते युक्तचेतसाम् ॥ ३२
योगेन चिरयोगेन लब्धे स्वानुभवे परे ।
परप्रमाणाभिभवाद्विजयी सुखमेधते ॥ ३३
ध्याने वा चित्तरोधादौ ये च सुरः परिपन्थिनः ।

प्रतिपक्षेण भावेन तान्निवारय लब्धधीः॥ ३४
प्रमामान्द्यं प्राज्ञसङ्गात् श्रवणाद्यैर्मुहुर्जयेत्।
कुतर्कं वैदिकैस्तर्कैर्निस्तर्कयितु मर्हसि॥ ३५
स्वशक्त्या विषयाशक्तिं विपर्ययदुराग्रहम्।
सच्छास्त्रानुभवाभ्यासैर्विनिग्रहीतु मर्हसि॥ ३६
श्रिचया जह्यकर्मण्यं गुरुशास्त्रप्रदत्तया।
आलस्यञ्च प्रमादञ्च सदोत्थानबलाज्जहि॥ ३७
दोषदृष्ट्याचाविरतिं भ्रान्तिमात्मविनिश्चयात्।
अलब्धभूमिकां यत्नैरेकततत्त्वानुचिन्तनात्॥ ३८
अनवस्थितचित्तत्वं संशयाच्छास्त्रनिश्चयात्।
अनुभूत्या च रोगान् स्वान् युक्ताहारविहारतः॥ ३९
चित्तघातं दैवदृष्ट्या दुःखं स्वान्यविवेकतः।
आसनैरङ्गकं पञ्च श्वासांश्च प्राणसंयमात्॥ ४०
क्षेत्रज्ञशीलनाद्वापि विक्षेपसहजानिमान्।
निद्रां तत्त्वानुसन्धानान्नब्धाहारादिसेवनात्॥ ४१
क्षुधां योगादयोगाच्च विषयस्नेहबन्धनम्।
जित्वा योगाय युञ्जस्व योगो योगेन दुःखहा॥ ४२
मनोभवमदोच्छिन्नं धावन्तं विषयान् प्रति।
असङ्कल्पाङ्कुशेनैव मनोनागं निवारय॥ ४३
क्रोधानलसमुद्दीप्तं क्षमासरसि मज्जय।
मात्सर्यशूलनिर्भिन्नं मैत्र्या भैषज्यमाचर॥ ४४
बलवित्तप्रभावाद्यैरधिकाधिकचिन्तनात्।
मदं मदमिवात्युग्रं संहारय महौषधात्॥ ४५
अव्यसनं व्यसनमदे धातुमदे सम्मिताहारः।

अतिधनगुणमदयोरतिधने गुणिनो हि दर्शनस्त्वगदम्॥४६
मायामदापहारे मायिन ईशस्य सर्व्वभावेन ।
स्मरणं विवेकयोगात् स्मरणं न परं परायणं मन्ये ॥४७
दुःप्रापमपि याचन्तं सद्धर्ममनपत्रपम् ।
स्वसन्तोषफलैर्लोलं लोभं बालं निवारय ॥ ४८
बहुरागरजोजुष्टं वैराग्यविमलोदकैः ।
स्नापयित्वा मनो बालम् अङ्के कृत्वा प्रबोधय ॥ ४९
अहं वेतालवशगं दृष्टं मोहमहाहिना ।
नाहं न मम मन्त्रेण चेतयैनमचेतनम् ॥ ५०
रागद्वेषमदोन्मत्तं विकलं सङ्गवायुना ।
प्राज्ञप्रज्ञापकाशुद्धस्नेहेनैनं स्थिरीकुरु ॥ ५१
धावन्तमिन्द्रियैः साकं बालिशैर्बालवत्सदा ।
दमदाम्ना निबद्ध्यैनं गुरुशास्त्रे नियोजय ॥ ५२
साधु कर्म्मारधौतेन शास्त्रमन्त्रेण कृत्स्नशः ।
भूयोऽनुभवखड्गेन छिन्ध्यस्याखिलसंशयम् ॥ ५३
ऐश्वरीं भक्तिभावेद्य तदुपासनया क्रमात् ।
अनाद्यविद्यया बद्धं मनोबन्धुं विमोचय ॥ ५४
आनन्दमचलं बोधमशोकं नाशवर्जितम् ।
स्वरूपमस्य विज्ञाप्य वैरूप्यादपि मोचय ॥ ५५
चेष्टयन्तं वृथा शश्वच्छोचयन्तं मुहुर्मुहुः ।
मृत्योरपरिहार्यत्वं मत्वा तद्भयमुत्सृज ॥ ५६
निवर्त्तय मनः शोकाद्दैवं मत्वा निवर्त्तितम् ।
प्रलापयन्तं दुर्व्वाचा पीडयन्तं तमदृश्यवत् ॥ ५७
नाममन्त्रं सदा शम्भोः पिबन् भक्तिरसायनम् ।

सर्व्वं दुष्टवशारामं वामं कामपदं जहि ॥ ५८
कामादितस्करग्रामं वामं ज्ञात्वा मनःपथा।
भगवद्भक्तिपाथेयो धीर! मोक्षाध्वगो भव ॥ ५९
स्तम्भिनीं रागवेगस्य सर्व्वापदि सहायिनीम्।
सत्सङ्गानुभवाभ्यासाद्धृतिमेकामुरीकुरु ॥ ६०
दग्धस्य रागरोषाभ्यां मोहितस्यासतो धिया।
दुःखशोकास्त्रविद्धस्य न धृतेरन्यदौषधम् ॥ ६१
अशक्ता विषयालाभे धृतिं यामवलम्बसे।
तां शक्ता शरणं क्रत्वा न साधयसि किं शिवम् ॥ ६२
सात्विकं धैर्य्यमालम्ब्य मत्या सत्वगुरूपया।
सत्ववान् सात्विकसुखमनुभूय सुखी भव ॥ ६३
अहमात्मा हृषीकेशो जन्मशोकादिवर्जितः।
सच्चिदानन्दरूपोऽहमिति शौर्य्यं विवर्द्धय ॥ ६४
कामक्रोधादि विविधोपद्रवायैष मर्कटः।
सङ्कल्प इति तं ब्रह्मस्तम्भे बध्वा सुखीभव ॥ ६५
कामक्रोधावनर्थस्य लोभश्च मद एव च।
मूलं जानीहि मात्सर्य्यमपि द्वन्द्वरागवैरयोः ॥ ६६
ममत्वमेकं बन्धस्य मोक्षस्य परिचिन्तनम्।
निद्रा च तमसोमूलं विपदां व्यसनानि च ॥ ६७
प्रमादो मरणस्यापि जन्मनः कर्म्म च द्विधा।
तस्यापि कामः कामस्य मनः सङ्कल्पशीलवत् ॥ ६८
मनसो मूलमज्ञानं तन्मूलमविचारता।
तां मारय विचारेण चोरीमिव तमश्चरीम् ॥ ६९
अबुद्धिरविवेकस्य मूलं तस्याश्च सङ्गतिः।

साधोः सत्सङ्गमस्तस्माद्बुद्धिं साध्वीं सुसाधय ॥ ७०
सर्व्वमासाद्यते काले चेष्टया बुद्धियुक्तया।
एकेनालस्यदोषेण यदि नासौ निवर्त्तते ॥ ७१
मोहवादागतं ह्येवमुत्साहोद्योगनाशिनम्।
असिद्धेर्मूलमालस्यमुत्थानेन विसर्जय ॥ ७२
तन्द्रीं क्षुधामपि तथा विसर्जयितुमर्हसि।
सर्वेन्द्रियमनोबुद्धिं प्रविश्य ज्ञाननाशकौ ॥ ७३
रागद्वेषौ विजेतव्यावन्यैर्जेया यथातथम्।
रागद्वेषाद्विभिन्नैर्व विषयेण प्रसादितैः।
इन्द्रियैरिवेन्द्रियैः कार्य्यं कारयित्वा वशी भव ॥ ७४
वशे तिष्ठन्ति नो चेत्ते पुष्टा भोगमदोद्धताः।
आहारनिग्रहादेतान् दुर्बलान् कुरु योगतः ॥ ७५
असङ्गात् साधुसङ्गाच्च नित्यानित्यविवेचनात्।
भोगादभोगादभ्यासादनभ्यासात् स्पृहां जहि ॥ ७६
कामग्राहगृहीतस्य ज्ञानमप्यस्य न प्लवः।
इति संस्मरणाज्ज्ञ यः स एको मोक्षकाङ्क्षिभिः ॥ ७७
रामा हि मूलं कामस्य वैरस्य पतनस्य च।
लोभादेरपि तामेकां हृदयादपसारय ॥ ७८
श्लेष्मविण्मूत्रसम्पूर्णा सान्द्रत्वगनुलेपना।
स्नायुबद्धातिदुर्गन्धा मांसमज्जास्थिपुत्तली ॥ ७९
अविचारात्सुन्दरीति प्रियेति स्त्री विभाव्यते।
विचारान्नरकद्वारमोभियमशुभावहा ॥ ८०
रेतोमूत्रपुरीषकीकसमरुन्मांसासृजां सत्वचां
मध्ये किं न जुगुप्सितं विमृशतां वामेक्षणानान्तनौ।

तत् कस्मिन्निह सस्पृहा हतधियो हा ! हन्त ! कं वा पुनर्लघीकृत्य मनोभवो विजयते तत्रैव लज्जामहे ॥ ८१

यस्यां मग्नमनामनागपि न तं सेव्यं शिवं सेवते
नैवापत्रप ! ते सभासु च सतान्नैवान्तकाह्विष्यति ।
तामग्रे जरयातिनिर्घविरसां नेत्रस्रवद्दूषिकां
शुष्कश्रोणिकुचाननां विदशनां दृष्ट्वा न किं तप्यति ॥ ८२

पन्थानौ द्वौ चेतसो याति चैको मोक्षागारं त्वतुरकान्तारमन्यम् ।
एकाग्रोऽग्रोज्ञानभानुप्रकाशः शेषोनेकः काममोहान्धकारः ॥ ८३
गोप्तैकस्मिन् साधुवैराग्यराजोहन्तान्यस्मिन्नागदस्युर्दुरात्मा ।
अस्त्येकस्मिन्नमृतं तुष्टिसिन्धोरस्त्यन्यस्मिन् दुर्जया नाम तृष्णा ॥८४
एकोगत्योद्घाटितोन्यं खिलत्वं यात्यैवैतत्सम्प्रधार्यात्मबुद्ध्या ।
भूयो भूयो मन्त्रयित्वा सुहृद्भिर्यच्छ्रेयः स्यात्तच्छ्रयस्व प्रयत्नात् ॥८५

अनन्तरं कुमारौ प्रणम्य सविनयमूचतुः ॥

भगवन् ! भवत्प्रसादाद्भवाम्भोधितरणाय योगं चित्तनिरोधरूपं ज्ञाननिश्चयरूपञ्च समाकर्ण्य कृतार्थौ स्वः। किन्तु निरोधस्वरूपस्याभ्यासवैराग्याभ्यां दीर्घकालनैरन्तर्यसत्कारसेवनादनेकजन्माधिगम्यस्य अनन्तान्तरायस्यातिचपलचित्तबालकस्यानिवार्यतया च योगोयमस्माकं दुःप्राप इति। तथैवाकाण्डखण्डनोद्दण्डपाषण्डपिशाचैः कुतर्ककर्कशशार्करवातैरन्धीकृतलोचनतया भ्राम्यमाणानां ज्ञाननिश्चयपरिचायकजनदुर्लभानुसरणतया ज्ञाननिश्चय सरणिरपि निःसरणेव प्रतिभाति। कर्माचरणमपि द्रव्ययाजकालशुद्ध्यादेर्दुर्लभत्वादधिकाराद्यभावात्कालसम्पत्त्यारोग्यादेरेकदा दुःप्रापत्वाद्दुःसरणं भवतीति विचारः

समायाति तच्छिष्य,तूरहपरमार्थलाभाय यदि कश्चिदुपायो विद्यते तद्विद्यापक्षाभ्यां प्रपक्षाभ्यामावाभ्यां पुनः प्रकटीकृत्य समुपदेशेति॥

कुमारवचोनिशम्य मुनिरुवाच।

ताताऽस्ति भक्तीश्वरप्रणिधानमित्युपायः पुरैव ते समुपदिष्टः। अत्र भगवता पतञ्जलिनापि तत्सूचितम्—'ईश्वरप्रणिधानाद्वा'-इति; तस्य स्वरूपं समुत्कर्षन्तद्वाचकं तत्प्रणिधानं "क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः"-इत्यादि सूत्रे स्तत्रैव परामृष्टं; क्लेशाः अविद्यास्मितारागद्वेषमोहाः; अविद्या अनित्याशुचि दुःखानात्मसु नित्यादिप्रतीतिदायिनी; पुरुषो दृक् शक्तिः, बुद्धिर्दर्शनशक्तिः, तयोर्भोक्तृभोग्ययोर्दृग्दर्शनशक्त्योरेकात्मिकैवास्मिता; अन्ये स्पष्टाः; अविद्या क्षेत्रमितरेषाम् अस्मितादीनां जन्मभूमिरिति एतैः परामृष्टो जीवः नेश्वर इति एतस्यातीतानागता प्रत्युत्पन्नप्रत्येकसमुच्चयातीन्द्रियबहुस्वल्पविषयकं सार्व्वज्ञं नैतादृशं कस्यापि तेन निरतिशयं सार्व्वज्ञबीजम्। अत्र श्रुतिरपि—मुण्डके। "तपसा चीयते ब्रह्म ततोऽन्नमभिजायते। अन्नात् प्राणो मनः सत्यं लोकाः कर्म्मसु चामृतम्। यः सर्व्वज्ञः सर्व्वविद्यस्य ज्ञानमयन्तपः" इति पूर्व्वेषामपि गुरुः कालेनानवच्छेदात् पूर्व्वेषां ब्राह्मणादीनाम्। तथाच, वायुसंहितायाम्—"ब्रह्मा-चेकदिनेत्यादि। जन्माद्यस्य इति, अस्य जगतो यस्माज्जन्मस्थितिलयाः। एवं नानामतमुररीकृत्य पुरोद्दिष्टं तस्य भगवतः परमेश्वरस्य सर्व्वज्ञसर्व्वैश्वर्य्यकाष्ठामधिगतस्य भगवतः सर्व्वशक्तिमतः सर्व्वजगज्जन्माद्यनुमेयस्य सर्व्वार्थशरण्यस्य सर्व्वजगदुद्धृतये गृहीतकारुण्यस्य सर्व्वभयातीतपदस्य सर्व्वसम्पदस्य

पदारविन्दमकरन्दसन्दोहसरसतया निष्यन्दीकृतचित्तवृत्तीनां तत्प्रसादोत्सारिताशेषप्रत्यूहानां तदनुकम्पासम्पादितसिद्धिसम्पदां सुखं सुखमयस्य सर्व्वभावापन्नानां भगवद्भक्तियोगो निखिलवेदवेदान्तसिद्धान्तपुराणेतिहासस्मृतितन्त्रैः लोकैश्च समालोकितः पन्था निःश्रेयसाय जयति। उक्तञ्च गीतायाम्।

'नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते।
स्वल्पमप्यस्य धर्म्मस्य त्रायते महतो भयात्॥' ८६

तथाच भारते—'सर्व्वलक्षणहीनो वा युक्तो वा सर्व्वपातकैः।
सर्व्वन्तरति तत्पापं भावितं शिवमाश्रितः॥ ८७
सर्व्वपातकसंयुक्ता ये भजन्ति महेश्वरम्।
ते तत्पापं विधुन्वन्ति ते यान्ति परमां गतिम्॥' ८८

स्कान्दे—'अनाराध्य महादेव मनाश्रित्य च काशिकाम्।
योगाद्युपायविज्ञोऽपि न निर्व्वाणमवाप्नुयात्॥' ८९

एवं गीतायाम्—'दैवी ह्येषा गुणमयी मम माया दुरत्यया।
मामेव ये प्रपद्यन्ते मायामेतान्तरन्ति ते॥ ९०
ईश्वरः सर्व्वभूतानां हृद्देशेऽर्ज्जुन! तिष्ठति।
भ्रामयन् सर्व्वभूतानि यन्त्रारूढ़ानि मायया॥ ९१
तमेव शरणं गच्छ सर्व्वभावेन भारत!।
तत्प्रसादात् परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम्॥' ९२

नरसिंहपुराणे—
'विषधरकणभक्षशङ्करोक्तीर्दशबलपञ्चशिखाक्षपादवादान्।
महदपि सुविचार्य्य लोकतन्त्रं भगवदुपास्तिमृते न सिद्धिरस्ति॥' ९३

भारते—'तावद्भ्रमन्ति संसारे दुःखशोकभयप्लुताः।
न भवन्ति शिवे भक्ता यावत्सर्वेऽपि देहिनः॥' ९४

श्रद्धाभक्तिज्ञानयोगादवैहीत्यादेश्यस्ते कीर्त्त्यते विस्तरेण ।
न्यूनस्यापि श्रद्दधानस्य कर्म्मसिद्धिर्नैवाश्रद्दधानस्य पूर्णम् ॥ ९५

उत्साहस्मृतिधीः समाधिगतिदा निःश्रेयिकैवोर्ध्वगा
राज्ञी वाधिकृतिं प्रयच्छति परां चाण्डालजातिष्वपि ।
भोज्यान्नान् कुरुतेऽथ वार्द्धुषिजनानान्नेव शेषाविधेः
सर्व्वाङ्गाख्यगणस्य पाति जननीवाज्ञानपि प्रज्ञया ॥ ९६

श्रद्धोपेतोऽथायतिर्हि वयोगाद्योगापेतः सन् मृतः प्राप्य दिव्यान् ।
भुक्त्वा भोगान् प्राप्य जन्मक्रमेण प्रज्ञावृद्ध्या जन्मभिश्चापि सिध्येत् ॥ ९७

मोक्षधर्म्मे—'अश्रद्दधान एवैको देवानाञ्चार्हते हविः ।
तस्यैवान्नं न भोक्तव्यमिति धर्म्मविदो विदुः
दीक्षितस्य कदर्य्यस्य वदान्यस्य च वार्द्धुषेः ॥' ९८

अन्नतारतम्ये ब्रह्मवाक्यम्—'श्रद्धापूतं वदान्यस्य हतमश्रद्धयेतरत् ।
जहाति पापं श्रद्धावान् सर्पो जीर्णामिव त्वचम् ॥' ९९

गीतायाम्—'श्रद्धावांल्लभते ज्ञानं तत्परः संयतेन्द्रियः ॥' ७००

मोक्षधर्म्मे—
'प्राप्य ज्ञानं ब्राह्मणात् क्षत्रियाद्वावैश्याच्छूद्रादपि नीचादभीक्ष्णम् ।
श्रद्धातव्यं श्रद्दधानेन नित्यं न श्रद्धिनं जन्ममृत्यू विशेताम् ॥' १

ज्यायसी सा पवित्राणां निवृत्तिः श्रद्धया सह ।
निवृत्ति-शीलदोषो यः श्रद्धावान् पूत एव सः ॥ २
किं तस्य तपसा साध्यं किं वृत्तेन किमात्मना ।
श्रद्धामयो यं पुरुषो यो यच्छ्रद्धः स एव सः ॥ ३

भविष्ये—'श्रद्दधानः शुभां विद्यामादधीतावरादपि ॥' ४
इत्यादि ।—सापि श्रद्धा गुणभेदात् त्रिविधा ।
गीतायाम्—'यजन्ते सात्त्विका देवान् यक्षरक्षांसि राजसाः ।

प्रेतान् भूतगणांश्चैव यजन्ते तामसा जनाः ॥' ५
तस्मादुत्कृष्टसत्त्ववन्तो भगवन्तं भजन्ति ।
तस्माच्छ्रद्धैव भक्तिमूलमिति श्रद्धा व्याख्याता ॥

अथ भक्तिरुच्यते ।

सा पुरैव निर्दिष्टा । ईश्वरविषयकसर्वोत्कृष्टत्वेन भावविशेषो भक्तिः । भावो रतिः, रतिर्देवादिविषयो भावः प्रोक्तः आलङ्कारिकैः येन भगवति आराध्यत्वेन ज्ञानं जायते । भगवदाराधनापि त्रिविधा—क्रिया-प्रेम-ज्ञान-रूपा तेषामपि क्रियातः प्रेमप्रेमतो वा क्रिया ताभ्यां ज्ञानं ज्ञानतोऽपि परमप्रेम इत्यभिधेयम् ।

आर्त्तिं हन्ति ददाति वाञ्छितफलं ज्ञानं ददात्यैश्वरं
विघ्नान्संशमयत्यतीव सु शुभं मुक्तिं परां यच्छति ।
भक्तिः साधनमत्र सिद्धिरपि सा ज्ञानात्तदैकात्मता
सिद्धिः कर्म्ममयी च साधनमिति ज्ञानप्रदेत्युच्यते ॥ ७

उक्तञ्च गीतायाम्—

'चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन ।
आर्त्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ! ॥' ८
तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ।
उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ॥ ९

ज्ञानं भगवद्यथार्थस्वरूपज्ञानम् । तद्वतो भक्तिर्ज्ञानभक्तिः, सर्व्वज्ञतादिसर्व्वशक्तिवैशिष्ट्येन सृष्ट्यादिजगदनुग्रहप्राधान्येन-प्रेमाकारान्यालीलागृहीतकिमपिचमत्कारिकारुणिककायचिन्तनाद्वा श्रवणादिना साहजिकवैधावैधकर्म्मार्पणेन क्रियामयी

अर्थार्थिनामार्त्तानां वा तत्तद्देवतोपासनायान्निष्ठा ज्ञानिनान्तु स्वरूपे निष्ठा जिज्ञासूनां क्रमेणोभयत्र ज्ञानिनो पूर्णकामा निष्कामाः प्रयोजनाभावात् कथं भजन्तीति चेत्तत्राह, भागवते।—

'आत्मारामा हि मुनयो निर्ग्रन्था अप्युरुक्रमे।
कुर्व्वन्त्यहैतुकीं भक्तिमित्यम्भूतगुणो हरिः॥ १०

सिद्धिं प्राप्तो यथा ब्रह्म तथा ब्रह्म इत्यारभ्य ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति।

समः सर्व्वेषु भूतेषु मद्भक्तिं लभते पराम्।
भक्त्या मा मभिजानाति यावान्यश्चास्मि तत्त्वतः॥ ११
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्।

अपि चेत् सुदुराचारो भजते मा मनन्यभाक्॥ १२
साधुरेव स मन्तव्यः सम्यग् व्यवसितो यतः।
क्षिप्रं भवति धर्म्मात्मा शश्वच्छान्तिं नियच्छति॥ १३

तथाहि—'मां हि पार्थ! व्यपाश्रित्य ये च स्युः पापयोनय.।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति पराङ्गतिम्॥' १४

लिङ्गे—'पितृहा मातृहा गोघ्नः सुरापो गुरुतल्पगः।
मम लिङ्गार्च्चनपरः सोऽपि याति पराङ्गतिम्॥' १५

तत्रैव पञ्चाक्षरीमन्त्रजपे—

'ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा वैवर्णसङ्कराः।
स्त्रियो म्लेच्छाश्च ये चान्ये सङ्कीर्णाः पापयोनयः॥ १६
नमस्कारसहस्रेण तदेव फलमाप्नुयुः।
नमस्कारः समुद्दिष्टो मन्त्रः प्रणववर्जितः॥' १७

पञ्चाक्षर इत्यादि-स्मृतिपुराणादिष्वनुसन्धेयानि तेन सर्व्वसाधारणसुलभोऽतिदुर्लभो भक्तियोगो निरूपितः। भक्ता अपि

क्रियावन्तोऽप्यकर्त्तारः, अजनाचाराचापि महाजना, सर्व्वतो विरसा अपि अनन्तप्रेमरसमग्नाः, हास्यरोदनरोमाञ्चनृत्य-गीतादिविकारिणोऽपि अविकाराः, प्रबुद्धा अपि भगवद्भावेतरेष्वप्रबुद्धा जीवोऽप्यजीवाः, असंसारिणोऽपि परानुग्रहार्थं संसरन्ति, किं बहुना सर्व्वकर्म्माणि कुर्व्वन्तोऽपि विषयवन्तोऽपि तद्व्यपाश्रयान् मुच्यन्त एव । गीतायाम्—

अथवा सर्व्वकर्म्माणि कुर्व्वाणो मद्व्यपाश्रयः ।
मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ॥ १८
चेतसा सर्व्वकर्म्माणि मयि सन्यस्य मत्परः ।
बुद्धियोगं समाश्रित्य मच्चित्तपरमो भव ॥ १९
मच्चित्तः सर्व्वदुर्गाणि मत्प्रसादात्तरिष्यति ।

बुद्धियोगं सद्भक्तिभावनास्वरूपम् अग्रे विवेचयिष्यामः ।
त्रिविधा भक्तिरपि ध्यानपरिपाकाय भवतीति ॥

ध्यानात् प्राप्तो बन्धनं जीव एष ध्यानादेवं ब्रह्मभावं समेति ।
ध्यानात् कीटो भृङ्गभावं यथेति तस्मादेको ध्यानयोगो हि मुक्तौ ॥ २०
वेदैस्तुल्याः सर्व्वयज्ञास्तेभ्यो जप्यं श्रेष्ठं जप्यतो ज्ञानमग्र्यम् ।
ज्ञानाद्ध्यानं रागसङ्गाद्व्यपेतं तस्मिन्प्राप्ते शाश्वतस्योपलब्धिः ॥ २१

तथा चात्रिस्मृतौ—

योध्या तानस्य यज्ज्ञानं यद्ध्येयं यत् प्रयोजनम् ।
सर्व्वाण्येतानि यो वेत्ति स योगं योक्तुमर्हति ॥ २२
आत्मा धाता मनोध्यानं ध्येयः साक्षान्महेश्वरः ।
यत्परापरमैश्वर्य्यमेतद्ध्यानप्रयोजनम् ॥ २३
विदित्वा सप्त सूक्ष्माणि षडङ्गञ्च महेश्वरं ।
प्रधानगुणतत्त्वज्ञः परं ब्रह्माधिगच्छति ॥ २४

ध्यानमुक्तम्। इदानीमति सुगमं ध्यानावयवं स्मरणमिति तत्रैव—

विद्वेषादपि गोविन्दं दमघोषात्मजः स्मरन्।
शिशुपालो गतः स्वर्गं किं पुनस्तत्परायणः॥ २५

एवं गारुड़ेऽपि—

आसनस्थानविषयो न योगस्य प्रसाधकाः।
शिशुपालः सिद्धिमाप स्मरणाभ्यासगौरवात्॥ २६

अत्रेः।—उपलब्धिः स्मृतिर्ध्यानं सङ्कल्पः प्रणवं प्रति।
कल्पना भावना चिन्ता ध्यानमित्यभिधीयते॥ २७
ध्यानेन सदृशं नास्ति शोधनं पापकर्म्मणाम्।
श्व-पाकेष्वपि भुञ्जानो ध्यानेनैव हि शुद्धाति॥ २८
ध्यानमेव परं ब्रह्म ध्यानमेव परन्तपः।
ध्यानमेव परं शौचं ध्यानमेव परं पदम्॥ २९
सर्व्वपापप्रसक्तोऽपि ध्यायन्नेव प्रमुच्यते।
भूयस्तपस्वी भवति पंक्तिपावन-पावनः॥ ३०

ध्यानाशक्तौ अनन्तमुखानां ध्यानानुसारेण मननपूर्व्विका भावना योगः सम्भवति। स भावनायोगो व्याख्यायते।

भावना सा परा सूक्ष्मा स्थूलेति त्रिविधा भवेत्।
अन्वयव्यतिरेकाभ्यां लयतश्चापवादतः॥ ३१
भावनाद्या परा साक्षात् सच्चिदानन्दरूपिणी।
सूक्ष्मा शक्तिविशिष्टेऽस्मिन् निजमायानियामिनि॥ ३२
जगद्रूपिणि वा तस्मिन् जगत्कारणकारणे।
घटादिवहुरूपेऽपि यथा मृत्स्नैकभावना॥ ३३
अन्तर्यामिनि वा तस्मिन् समस्त-व्यस्त-भेदतः।
सूक्ष्मा चैवं भवेत् स्थूला मूर्त्तिमात्रावलम्बिनी॥ ३४

मत्स्यपुराणे—भौतिकी भावना पूर्व्वं साङ्गेर त्वक्षरभावना।

तृतीये चान्तिमा प्रोक्ता भावना पारमेश्वरी ॥ ३५

भूतशब्दस्तु जड़जगदुपलक्षणः, सा तु योगिनां स-वितर्क-स-विचार-सानन्दाख्या। हिरण्यगर्भ-विराड्रूपाद्यवलम्बिनी अक्षरा तु कूटस्थ-चिन्मात्रावलम्बिनी। पारमेश्वरी तु परमात्मावलम्बिनी। परमात्मा षड्विंशः।

उक्तञ्च मोक्षधर्मे—

चतुर्विंशतितत्त्वेभ्यः ख्यातो यः पञ्चविंशकः।

स एव केवलीभूतः षड्विंश मनुपश्यति ॥ ३६

परिच्छिन्न-कूटस्थ-ज्ञानेन जातात्मज्ञान-साक्षात्कारस्यापि परिपूर्ण-परमात्म-ज्ञानमपेक्षितं जीवात्मापेक्षया परमात्मनः सूक्ष्मत्वात्।

उक्तञ्च कौर्मे—

यत्र पश्यति चात्मानं नित्यानन्दं निरञ्जनम्,

मामेकं परमो योगी भाषितः पारमेश्वरः।

यत्र पश्यति चात्मानं विमुक्ताविश्वमीश्वरम् ॥ ३७

सापि पारमेश्वरी भावना त्रिविधा स्वरूपावलम्बिनी सृष्ट्यादिसामर्थ्यमात्रवत्यात्ममायाशक्तिविशिष्टा। स्वस्मा चिन्तामयीत्युच्यते। सा कारणात्मिका। माया तदुत्थप्रपञ्चविशिष्टा स्थूला आद्या व्यतिरेकलयापवादभावनया भाव्यते। द्वितीया त्वचिन्त्य-प्रभावप्रकटितभक्तिभावना।

तृतीया तु शक्ति-शक्तिमतोरभेदात् ब्रह्मणो जगदुपादान-तया कार्य्यकारणजातं सर्वं ब्रह्मेति सर्व्वं जगति ब्रह्मारोपभावनया जगन्नियन्तृत्वेन प्रत्येकबुद्ध्यादिप्रेरकान्तर्यामिभावना उभ-

यथा क्रियाशक्तिप्रधानया अथवा प्रणवादिनामप्रतीकलीला-
गृहीतरूपादिभावनया।

व्यतिरेकभावना मारभ्योच्यते—

तिलेषु तैलं पयसो घृतं वा मुञ्जेषु सारात्मतयेषिकां वा!
यथा तथा देहत एनमन्तरात्मान मन्विच्छति पूर्व्वबुद्धः॥ ३८
सुवर्णमात्रे कटकादिचित्र मुत्पद्यते तिष्ठति लीयते च।
यथा जले बुद्बुदवीचयोऽस्मिंस्तथा जगद्रूपलयं प्रतीहि॥ ३९
प्रतीयमानेष्वपि रोचिरष्णु कालत्रयेनाम्बुमरीचिरेव।
यथा तथास्मिन्नपि विद्यमाना नास्त्येव मायास्ति स एक एव॥ ४०

मनसैवानुद्रष्टव्यम्। नेह नानास्ति किञ्चनेत्यादिश्रुति-
वाक्यानि प्रमाणान्यवधारय।

अथवा पञ्चभूतेभ्यो जातमण्डं महामुने!
भूतमात्रतया दग्ध्वा विवेकेनैव वह्निना॥ ४१
पुनः स्थूलानि भूतानि सूक्ष्मभूतात्मना यथा।
विलाप्यैनं विवेकेन ततस्तान्यपि बुद्धिमान्॥ ४२
मायामात्रतया दग्ध्वा मायाञ्च प्रत्यगात्मना।
सोहं ब्रह्म न संसारी न मत्तोऽन्यत् कदाचन।
इति विद्यात् स्वमात्मानं सा समाधिः प्रकीर्त्तिता॥ ४३
अथवा योगिनां श्रेष्ठः प्रणवात्मानमीश्वरम्।
वर्णत्रयात्मना विद्यादकारादिक्रमेण तु॥ ४४
ऋग्वेदोयमकाराख्य उकारो यजुरुच्यते।
मकारः सामवेदश्च नादश्चाथर्वणीश्रुतिः॥ ४५
अकारो भगवान् ब्रह्मा तथोकारो हरिः स्वयम्।
मकारो भगवान् रुद्रस्तथा नादश्च कारणम्॥ ४६

अक्षरत्रयं त्रयो लोकाः अवस्थावस्थास्तथा ।
उदात्तादिस्वराः काला एते वर्णत्रयात्मकाः ॥ ४७
इति ज्ञात्वा पुनः सर्व्वम् अक्षरत्रयमात्मनः ।
विलाप्याकारमहन्द्रम् उकारो वा विलापयेत् ॥ ४८
उकारञ्च मकाराख्ये तथा नादे मकारकम् ।
तथा मायात्मना नादं मायां जीवात्मरूपतः ॥ ४९
जीवमीश्वरभावेन विद्यात्सोहमिति ध्रुवम् ।
एषा बुद्धिस्तु विद्वद्भिः समाधिरिति कीर्त्त्यते ॥ ५०

अथ स-प्रपञ्च-भावनायाः प्रमाणानि तत्सर्वं खल्विदं ब्रह्म तज्जलानिति च श्रुतिः ।

प्रपञ्चे ब्रह्म तादात्म्यादुपासीत न चान्यथा। तथा विष्णुपुराणे। वनानि विष्णुर्भुवनानि विष्णुरित्यादि ।

अन्तर्यामिभावनायाम्। लैङ्गे वायव्ये च—

विग्रहं देवदेवस्य जगदेतच्चराचरम् ।
सर्व्वोपकारकरणं सर्व्वानुग्रहकारकम् ॥ ५१
सर्व्वाभयप्रदानञ्च शिवस्याराधनं विदुः ।
देहिनो यस्य कस्यापि क्रियते यदि निग्रहः ॥ ५२
अष्टमूर्त्तेर्महेशस्य कृतमेव न संशयः ।

अत्र उपकारापकारभोगी जीववन्न महेश्वरस्य किन्तु उपद्रष्टृतया ।

उक्तञ्च गीतायाम्—परमात्मेति चाप्युक्तो देहेऽस्मिन् पुरुषः परः ।
उपद्रष्टानुमन्ता च कर्त्ता भोक्ता महेश्वरः ।
यो लोकत्रयमाविश्य विभर्त्त्यव्यय ईश्वरः ॥ ५३

अविद्या विशिष्टस्य जीवस्य मायासहकारेण प्रेरक ईश्वरः,

सजीवं प्रेरयति कर्म्मानुसारेण सबुद्धिमित्यादि विषयपर्य्यन्तम् -इत्यन्तर्य्यामिब्राह्मणेषु रुद्रिभेष्वनुसन्धेयम्। अन्तर्यामिभावनापि द्विविधा स्थूलसूक्ष्म-प्रपञ्च-नियन्तृत्वेन। अत्यन्तवहिर्मुखानां नामाद्येषु प्रतीकेषु भगवद्विभूतिषु इन्द्रचन्द्रवरुणादिषु चिन्तनम्, उत्तमाधिकारिणान्तु कृत्स्न-प्रपञ्चान्तर्य्यामित्वेन चिन्तनम्।

गीतायाम्— अहमात्मा गुड़ाकेश! सर्व्वभूताशयस्थितः।

अथवा बहुनैतेन किं ज्ञातेन तवार्जुन!।

विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्॥ ५४

बहुभावनाभिः साङ्कर्य्येण स्मर्य्यते विष्णुपुराणे—

विष्णुं सर्व्वं जगदिदं विष्णुः सर्व्वस्य कारणम्।

विष्णुरेवाहमिति यत्तद्विष्णोः स्मरणं परम्॥ ५५

तत्रैव—

अहं हरिः सर्व्वमिदं जनार्द्दनो नान्यत्ततः कारणकार्य्यजातम्।

एवं मनो यस्य न तस्य भूयो भवोद्भवाद्द्वन्द्वगदा भवन्ति॥ ५६

अथ लीलास्वरूपभावनोच्यते—

लीलारूपं प्रणववाच्यस्य उक्तविभूत्यंशरूपवत्तद्रूपं नानुसन्धेयम्। किन्तु भक्तानुग्रहहेतवे मायारचितविग्रह इत्यवगन्तव्यः।

तथाच मोक्षधर्म्मे नारदं प्रति भगवान्—

माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद!॥

सर्व्वभूतगुणैर्युक्तं नैवं मा मन्तु मर्हसि॥ ५७

अतएव तत्तल्लोकस्यापि स्वेच्छया कल्पितस्य स्वेच्छयैवोपसंहारः न च ब्रह्मलोकादिवत् कालकल्पितभयकलनम्।

शिवधर्म्मोत्तरे त्रिविधं ब्रह्मचिन्तनं स्फुटमुक्तम्—

हृत्पद्मकर्णिकामध्ये शुद्धं दीपशिखाकृतम्।
अङ्गुष्ठमात्रं पुरुषं ध्यायेदोङ्कारमीश्वरम्॥ ५८
कदम्बगोलकाकारं तारारूपं व्यवस्थितम्।
ध्यायेद्वा रश्मिजालेन दीप्यमानं समन्ततः॥ ५९
धायेद्वा सततं साम्बं वक्ष्यमाणैकरूपकम्।
प्रधानपुरुषोपेतं शितपद्मस्थमीश्वरम्॥ ६०
जपेद्ध्यायेच्च सततमोङ्कारं शिवरूपिणम्।
मात्रास्तिस्रः समाख्यातास्त्रन्दो देवी महेश्वरः॥ ६१
अथवान्यत्प्रकारेण ब्रह्मविष्णुमहेश्वराः।
क्रमान्मात्राः समुद्दिष्टास्तत्परः साङ्गमात्रया॥ ६२
भावनामात्रगम्यत्वादचिन्त्यः परमेश्वरः।
सकलं चिन्तयेत्तस्मात् सिद्धार्थं स तनुं शिवम्॥ ६३
केचित् क्षित्यादितत्त्वानाञ्जयमिच्छन्त्यनुक्रमात्।
सिद्धे सर्व्वेश्वरे देवे युगपत्संप्रवर्त्तते॥ ६४
यद्यत्तत्त्वं दैवतं वा ध्यायेदभ्यासकारणात्।
तत्तदीश्वररूपेण तत्त्वं धायेदधिष्ठितम्॥ ६५
क्लेशकर्म्माद्यसंस्पृष्टं नित्यमुक्तं महेश्वरम्।
उमासहायमोमर्थं शरण्यं शरणं व्रज॥ ६६

सूतसंहितायाम्—

यां यां मूर्त्तिं समाश्रित्य ब्रह्मभावनया जनाः।
आराधयन्ति ते सर्व्वे क्रमाज्जानन्ति शङ्करम्॥ ६७
रुद्रमूर्त्तिं समाश्रित्य प्रसादात् क्रमवर्जितात्।
अतत्त्वे नैव जानन्ति शिवं सर्व्वत्र संस्थितम्॥ ६८
कानिचिद्दैवतान्यानि ब्राह्मणा वेदवित्तमाः।

रुद्रमूर्त्तिं समाश्रित्य शिवे परमकारणे ॥ ६८

पर्थ्येवस्यन्ति विप्रेन्द्र तथा वा कानि कानिचित्।

ब्रह्ममूर्त्तिषु कानीह तथाग्नेयीष्वपीत्यादि ॥ ७०

पाद्मे—शैवाः सौराश्च गाणेशा वैष्णवाः शक्तिपूजकाः।

मामेव प्राप्नुवन्तीह वर्षापः सागरं यथा ॥ ७१

मोक्षधर्म्मे—ब्रह्माणं शितिकण्ठं वा याश्च काश्चन देवताः।

प्रबुद्धवर्याः सेवन्तो मामेवैष्यन्ति यत्परम् ॥ ७२

गीतायाम्—येऽप्यन्यदेवता भक्ता यजन्ते श्रद्धयान्विताः।

तेऽपि मामेव कौन्तेय! यजन्ति विधिपूर्व्वकम् ॥ ७३

कोवा अविधिरिति—

अहं हि सर्व्वयज्ञानां भोक्ता च प्रभुरेव च।

न तु मामेव जानन्ति तत्त्वेनातश्च्यवन्ति ते ॥ ७४

इति ते भावनाः समुद्दिष्टाः सप्रपञ्चभावनाश्च समुपदिष्टाः।

निषेधशेषभावनायां निषेध्यतत्त्वानां भावना नोपादेया ॥ ७५

किन्तु। तद्भिन्नसिद्धये सा प्रयोजिका भवति विशुद्धब्रह्म-भावनैवादेया। एवं सर्व्वासु भावनास्वनुसन्धेयम्। आस्वाद्यं स्याम्नाचिकं नैव पुण्यं सम्भाव्यं तद्ब्रह्मनोपाधिलक्षणम्। तस्मात् कार्य्ये कारणे वाऽस्वरूपे शुद्धा चैका भावनैवेति बुद्धिः।

तत्र पराशरे—आत्मा शक्तिः शिवश्चेति चैतन्यमिति संस्थितम्।

उत्तरोत्तरवैशिष्ट्याद्योगाभ्यासः प्रवर्त्तते ॥ ७६

यच्छिवाधिष्ठितं रूपं तद्ध्यानं पापशुद्धिदम्।

तस्माद्धेयानि सर्व्वाणि त्यक्त्वा ध्येयो महेश्वरः।

तस्मिन्सिद्धे सर्व्वतः सिद्धिर्न सर्व्वैः सिद्ध्यते शिवः ॥ ७७

केनोपनिषदि—तदेव ब्रह्म त्वं विद्धिनेदं यदिदमुपासते।

अथ भिदामेव मन्यमानो शतधा सहस्रधा मृत्योः स मृत्यु-माप्नोति उदरमन्तरं कुरुते। तथा—ब्रह्म वा इदमग्रे आसीत् तदात्मानमेवावेत। अथ योऽन्यां देवतामुपास्ते। अन्योऽसावन्योऽह मिति न स वेद यथा पशुः सदेवैकमद्वितीयमिति ज्ञानं नात्र काचन भिदास्ति। इति भावनोक्ता।

भावनानिष्पत्तिलक्षणमुच्यते—

यदा मनसि चैतन्यं भाति सर्वत्रगं सदा।
योगिनो व्यवधानेन ब्रह्म सम्पद्यते तदा॥ ७८

मोक्षधर्मे—निर्व्वाणमयमेवायमात्मज्ञानमयोऽयतः।
दुःखज्ञानमया धर्म्माः प्रकृतेस्ते तु नात्मनः॥ ७९

ईश्वरगीतायाम्—ज्ञानस्वरूपमेवाहुर्जगदेतद्विचक्षणाः।
विष्णुपुराणे—ज्ञानस्वरूपमत्यन्तं निर्म्मलं परमार्थतः।
तदेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम्॥ ८०

तथा—

एकं समस्तं यदिहास्ति किञ्चित्तदच्युतो नास्ति परं तदन्यत्।
सोऽहं सत्वं स च सर्व्वमेतदात्मस्वरूपं त्यज भेदमोहम्॥ ८१

श्रुतिश्च सद्विदं सर्व्वं सदसदिति। चिद्विदं सर्व्वं प्रकाशते आनन्दमिति सुन्दरमिदं सुन्दरमिति। अस्मिन् प्रत्यये यदानन्द-कारस्तत्प्रियमिति तस्मात् सच्चिदानन्दरूपमेव भावनीयमिति एवं भाव्ये सिद्धेऽपि तद्ब्रह्मा शरीरेन्द्रियचित्तत्वात् कथमनु-ग्राहकं भविष्यतीति कुतर्कावकाशो न देयः यस्य मायात्मशक्तिर्हि यस्याः कालादयः कलाः।

वपुर्यस्य जगत्सर्वं मायामात्र विजृम्भितम्।
भजतां देवता कान्यावोपास्योपास्य तं शिवम्॥ ८२

विष्णुसंहितायाम्—देवतैयं परं ज्योतिरेकएव परः पुमान्।
स एव मायया लोके बहुधा विद्यते स्वया॥ ८३

भगवानुवाच।

भागवते—अहं ब्रह्मा च रुद्रश्च जगतः कारणं परम्।
आत्मेश्वरमुपद्रष्टा स्वयं दृगविशेषणः॥ ८४

गीतायाम्—अहं सर्व्वस्य प्रभवो मत्तः सर्व्वं प्रवर्त्तते।
इति मत्वा भजन्ते मां बुधा भावसमन्विताः॥ ८५
मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम्।
कथयन्तश्च मां नित्यं नित्ययुक्ता उपासते॥ ८६
तेषां सततयुक्तानां भजतां प्रीतिपूर्व्वकम्।
ददामि बुद्धियोगन्तं येन मामुपयान्ति ते॥ ८७
तेषामेवानुकम्पार्थमहमज्ञानजन्तमः।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता॥ ८८

तथा—पुरुषः स परः पार्थ! भक्त्या लभ्यस्त्वनन्यया।
यस्यान्तःस्थानि भूतानि येन सर्व्वमिदं ततम्॥ ८९

मोक्षधर्मे नारदं प्रति नारायणः। आत्मयोनिं पुराणं नारायणमुक्त्वा तमपि अव्यक्तपरमात्मयोनिं निर्णीय—
तं देवमाश्रमाश्चैव नानामतमुपाश्रिताः।
भक्त्या संपूजयन्त्यन्य फलं तेषां ददाति सः॥ ९०
ये तु मद्भाविता लोके ये कान्तिनश्च माश्रिताः।
ये तदभ्यधिकं तेषां यत्ते तं प्रविशन्ति च॥ ९१

तथाहि—द्विर्द्वादशेभ्यस्तत्त्वेभ्यः ख्यातो यः पञ्चविंशकः।
पुरुषो निष्क्रियो यश्च ज्ञानदृश्यः स कथ्यते॥ ९२
तं प्रविश्य भवन्तीह मुक्ता वै द्विजसत्तम!।

स वासुदेवसंज्ञोऽसौ परमात्मा सनातनः ॥ ९३

तं कालमिति जानीहि यस्य सर्व्वमिदं वशे ॥ ९४

तदशक्तौ तच्छ्रवणं कुर्य्यात् कर्म्माणि वा कुर्य्यात्।

तद्धेतोर्वा तस्मिन् सर्वफलं साधुसमर्पस्य ॥ ९५

तत्परतन्त्रः कुर्व्वन् वैधावैधं स्वसाहजं कर्म्म।

तिष्ठेदिस्वस्य सदा जिज्ञासुर्वाथ सद्गुरुं वा सेवन् ॥ ९६

श्रवणस्य च परिपाकान्मननमयी भावनापाकः।

तत्परिपाकाद्ध्यानं समाधिरपि पाकतो भवति ॥ ९७

श्रवणाधिकारिणो निरूपयन्ति सूतसंहितायाम्—

अन्ये तु ब्राह्मणा विष्णो! राजानश्च विशेषतः।

वैश्याश्च तारतम्येन ज्ञानाभ्यासेऽधिकारिणः ॥ ९८

अस्ति शूद्रस्य शुश्रूषोः पुराणेनैव वेदनम्।

अन्येषामपि सर्व्वेषां ज्ञानाभ्यासो विधीयते ॥ ९९

भाषान्तरेण कालेन तेषां सोप्युपकारकः ॥ ८००

भाषान्तरेणेति श्रुतिस्मृतीतरशब्दान्तरेण न तु ताभ्याम्।

मोक्षधर्म्मे—

साङ्ख्ययोगावुक्ता एतेषाञ्चेदनुद्रष्टा पुरुषोऽपि सुदारुणः।

यदि वा सर्व्ववेदज्ञो यदि वाप्यनृचो द्विजः ॥ १

यदि वा धार्म्मिको यज्वा यदि वा पापकृत्तमः।

यदि वा पुरुषव्याघ्रो यदि वा क्लैब्यधावितः ॥ २

तरत्येव महादुर्गं जरामरणसागरम्।

एवमेकेन योगेन युञ्जानोह्येकमन्ततः।

अपि जिज्ञासमानो हि शब्दब्रह्माति वर्त्तते ॥ ३

साङ्ख्याः सर्वे साङ्ख्यधर्म्मरताश्च योगाः सर्व्वे योगधर्म्मे रताश्च।

ये वाप्यन्ये मोक्षकामा मनुष्यास्तेषामेतद्दर्शनं ज्ञाननिष्ठम्॥ ४
तस्माद् ज्ञानं सर्वतोऽन्वेषितव्यं येनात्मानं मोचयेज्जन्ममृत्योः।
प्राप्य ज्ञानं ब्राह्मणात् क्षत्रियाद्वा वैश्याच्छूद्रादपि नीचादभीक्ष्णम्।
श्रद्धातव्यं श्रद्दधानेन नित्यं न श्रद्धिनं जन्ममृत्यू विशेताम्॥ ५
तथा—'एतज्ज्ञात्वा पुमांस्त्री वा न पुनर्भवमाप्नुयात्'।
अत्र स्त्रीपुंशब्देन मनुष्यमात्रं विवक्षितम्॥ ६
मोक्षधर्मे— यस्यात्मामविज्ञातं सगुणं निर्गुणं पुनः।
तेन तीर्थानि यज्ञाश्च सेवितव्या विपश्चिता॥ ७
गीतायाम्—अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम्।
अभ्यासयोगेन ततो मामिच्छाप्तुं धनञ्जय!॥ ८
अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव।
मदर्थमपि कर्माणि कुर्व्वन् सिद्धिमवाप्स्यसि॥ ९
अथैतदप्यशक्तोऽसि कर्तुं मद्योगमाश्रितः।
सर्व्वकर्मफलत्यागं ततः कुरु यतात्मवान्॥ १०
श्रेयो हि ज्ञानमभ्यासाज्ज्ञानाद्ध्यानं विशिष्यते।
ध्यानात् कर्मफलत्यागस्त्यागाच्छान्तिरनन्तरम्॥ ११
मद्योगमाश्रित्य सर्व्वकर्मफलं त्यजेदित्यभिप्रायः।
सुगमत्वेन दर्शितः।
तत्रैव—अथवा सर्व्वकर्माणि कुर्व्वाणो मद्व्यपाश्रयः।
मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम्॥ १२
चेतसा सर्व्वकर्माणि मयि सन्न्यस्य मत्परः।
बुद्धियोगं समाश्रित्य मच्चित्तः सततं भव॥ १३
मच्चित्तः सर्व्वदुर्गाणि मत्प्रसादात्तरिष्यसीत्यादि भगवद्वचनानि।
इति श्रुत्वा कुमारी प्रहृष्टान्तरङ्गा पुनरूचतुः॥

प्रणवं प्रणवार्थञ्च तच्चिन्तामपि नो वद।
इत्यर्थितः कुमाराभ्यां मुनिस्तौ पुनरब्रवीत्॥ १४

अस्ति पूर्णचिद्रूपस्य परमात्मनः परमेश्वरत्व-व्यञ्जिका अविनाभूता स्वाभाविकी शक्तिर्ज्ञानेच्छाकृतिरूपा। श्रुतिश्च "न तस्य कार्यं करणञ्च विद्यते न तत्समोऽस्त्यभ्यधिकश्च दृश्यते। परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च।" ज्ञानं नाम सार्व्वज्ञं स्थूलसूक्ष्मप्रत्येकसमुच्चयेन आत्मानात्मविषयकं युगपत्प्रतिभासमानं तत्तारकमिति प्रसिद्धम्। इच्छाशक्तिस्तु इदमित्थं भवत्विति सत्यसङ्कल्परूपा तदनुगुणकार्य्यसम्पादिनी। कृतिशक्तिरियं बहुरूपैका धर्म्मरूपा स्वेच्छया कृतकालनियमवशादर्म्मिचैतन्येन जाग्रद्रूपा जगन्निर्म्माणादिविधायिनी भवति। तत्स्था या चित्सा चिच्छक्तिरित्युच्यते; सा पूर्णपरमानन्दचिदात्मनः स्वसाक्षिभूतस्य स्वामिनः शिवस्याङ्कमण्डनभूता महिषीव महिषीतुच्यते; चन्द्रचन्द्रिकयोर्दीपदीपशिखयोरिवानयोर्भेदः। भगवानपि साक्षित्वेनोदासीनतया स्थितोऽपि शक्तिगुणाध्यासात् ज्ञानेच्छाकृतिशक्तिमानिति सामीप्यरागरञ्जितस्वच्छस्फटिक इव तस्याश्चिच्छक्तेः स्वेच्छाकल्पितकालवशात् स्ववशेच्छादिशक्तिस्वभाव-शबल-शब्दार्थज्ञानरूपप्रपञ्च-जनयित्री क्रीड़या जगज्जन्ममोक्षविधात्री साविर्भवत्यादिशक्तिः या महामाया परमा शक्तिः कुण्डलिनीत्यादिशब्देन प्रस्तूयते सा नवव्यूहात्मिका परिणमते।

कालव्यूहः कुलव्यूहो नामव्यूहस्तथैव च।
ज्ञानव्यूहस्तथा चित्तव्यूहस्तात्तदनन्तरम्॥ १५
नामव्यूहस्तथा बिन्दुव्यूहस्तात्तदनन्तरम्।

कलाव्यूहस्तथा जीवव्यूहः स्यादिति वै नव ॥ १६

सैव विद्या च अविद्या चेति। श्रुतिश्च—'सा विद्या ऽविद्या च माया भवति।' स्मृतिश्च—

मत्स्यपुराणे—यस्त्वां विचिन्तयेद्देवीं विद्याऽविद्यास्वरूपिणीम्।
तस्य भोगश्च मोक्षश्च सदा करतले स्थितौ ॥ १७

मार्कण्डेये—सा विद्या परमामुक्तेर्हेतुभूता सनातनी।
संसारबन्धहेतुश्च सैव सर्व्वेश्वरेश्वरी ॥ १८

तत्रैव—परापराणां परमा त्वमेव परमेश्वरी।

तत्र पराविद्या, अपरा अविद्या तदुभयात्मिकाशेषसामर्थ्यवती महामाया परमेति। तदधिष्ठानभूता चिदेव परमेश्वरी। तस्याः प्रथमस्पन्दभूतो नादः। नादस्तु विन्दु-मकारोकाराकाररूपेण परिणतः प्रणवत्वं भजते। प्रकर्षेण नूयते स्तूयते इति प्रणवः।

उक्तञ्च—अदृष्टविग्रहो देवो भावग्राह्यो मनोमयः।
प्रणवो वाचकस्तस्य तेनाहूतः प्रसीदति ॥ १९

श्रुतिश्च—प्रणवो धनुः शरोह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते।
अप्रमत्तेन वोद्धव्यं शरवत्तन्मयो भवेत् ॥ २०

अन्यत्त—प्रणवञ्च रथं कृत्वा विष्णुं कृत्वा च सारथिम्।
ब्रह्मलोकपदान्वेषी रुद्राराधनतत्परः ॥ २१

इति सार्द्धत्रिमात्रः प्रणवस्त्रिदेवमुख्यांस्त्रिलोकांस्तनुते त्रिमात्रया। तदर्द्धमात्रामपि कारणात्मच्छक्तिं शिवानादमयीं स्मरन्ति ॥ २२

उक्तञ्च। भविष्ये—

अर्द्धमात्रा तु या सूक्ष्मा सा ज्ञेया चण्डिका बुधैः।
तस्या एव समुत्पन्नं जगतः कारणत्रयम् ॥ २३
ब्रह्मविष्णुशिवाख्यञ्च चण्डिकात्मसमुद्भवम्।

अथर्व्वशिखायाम्—एतदक्षरं परं ब्रह्म अस्य पादाश्चत्वारो वेदाश्चतुष्पादमक्षरं परं ब्रह्म। पूर्व्वास्य मात्रा पृथिव्यकारः स ऋग्वेदो ब्रह्मा वसवो गायत्री। गार्हपत्यो द्वितीयान्तरिक्षं स उकारः स यजुर्भिर्यजुर्वेदो विष्णुरुद्रस्त्रिष्टुप्दक्षिणाग्निस्तृतीया द्यौः स मकारः स सामभिः सामवेदो रुद्र आदित्यो जगत्या-हवनीयोवसानेस्य चतुर्थ्यर्द्धमात्रया स सोमलोकः उकारः सोथर्वणैर्मन्त्रैरथर्ववेदो संवर्त्तकोऽग्निः मरुतो विराडेक ऋषि-र्भास्वती स्मृता रक्तपीता महद्ब्रह्मदैवत्या द्वितीया द्युमती कृष्णा विष्णुदैवत्या तृतीया शुभाशुभा शुक्ला रुद्रदैवत्या वसाने चतु-र्थ्यर्द्धमात्रा सा विद्युमती सर्व्ववर्णा पुरुषदैवत्या। अत्र केचि-दथर्व्वशिरसि चतुर्थी विद्युन्मयी शक्तिः शान्तोमा सहाथर्वणै-र्मन्त्रैरित्यादिविशेषतया श्रावयन्ति। उमासोमलोकयोरैक्यार्थम्।

ब्रह्मोपनिषदि—जाग्रति ब्रह्मा स्वप्ने विष्णुः सुषुप्तौ रुद्रस्तु-रीयं परमाक्षरं स ब्रह्मा स आदित्यः स विष्णुः स पुरुषः स जीवः सोऽग्निः स ईश्वरः स प्रजापतिः सर्वं ब्रह्म विभाति। इत्यादि बह्वीषु श्रुतिषु बहुशः श्रूयते।

स चापि नादो भजते चतुर्विधं परादिभेदेन चिदन्तरङ्गः।
तरङ्गवत्पूर्णचिदम्बुराशेरासेविता मुक्तिकरी यतीनाम्॥ २४

परात्व्यक्ता ध्वनिर्ब्रह्मवाचका परमाक्षरा।
मनसोऽविषया साथ पश्यन्ती मध्यमाधियः॥ २५
मनसो विषये ते द्वे सूक्ष्मे स्थूला परा स्मृता।
स्वात्मिकोच्चार्य्यमाणा वैखरी सा निगद्यते॥ २६

व्युत्क्रमेण शिवागमे। वायुसंहितायाञ्च—

आद्या शब्दमयी प्रोक्ता सूक्ष्मा चिन्तामयी भवेत्।

चिन्तया रहिता या तु सा परा परिकीर्त्तिता ॥ २७

स्थूला दृश्यप्रपञ्चाख्या सूक्ष्मा वै व्यापिनी कला।

परा तु केवला प्रोक्ता ज्ञानरूपा तु निष्कला ॥ २८

स्मर्य्यते च बिन्दुः पञ्चमः स्वरः।

बिन्दुस्तावदर्द्धमात्रस्तदभिव्यञ्जको ध्वनिः।

बिन्दोस्तस्माद्भिद्यमानाद्रवो व्यक्तात्मकोऽभवत् ॥ २९

स एव श्रुतिसम्पन्नो शब्दब्रह्मेति गीयते।

उपादानं स जगतो बिन्दुतादात्म्यतः स्फुटम् ॥ ३०

आधारेऽखिलजन्तूनां व्यज्यते पुनरेव तु।

भूताकाशे स एवाविर्भवदन्तस्थवायुना ॥ ३१

कोष्ठाग्निप्रेरितः सोपि विवक्षोः पुरुषस्य च ॥ ३२

एवं प्रतिपुरुषनिष्ठापि नादशक्तिः परब्रह्माश्रयेत्यवधेया। एवं परमाकुण्डलिनी च।

योगियाज्ञवल्क्ये—चिच्छक्तिरपि चतुर्द्धा विभासतेऽत्र स्वशक्तिभेदेन भावाभावविहीना प्रपञ्चशून्या विकल्पेति अधिष्ठानातिरिक्तस्वरूपशून्यां स्वस्वरूपेण स्वरूपवतीं सत्तामात्राधिष्ठाय या तिष्ठति सानुज्ञातामेव शक्तिं स्वशक्तिस्फूर्त्तिभ्यां व्यवहारयोग्यतां या करोति सानुज्ञात्री सुषुप्तजीवाविभक्तेश्वरस्थ या सृष्ट्युन्मुखी प्रलयोन्मुखी वा तदधिष्ठातृतया ओतेति उक्तास्ते चतुर्द्धा विभक्ताः प्रणवार्थाः लैङ्गे—

चन्द्राग्निसूर्य्यवर्णाख्यत्रिमात्रं प्रणवस्य तु।

तस्योपरि सदापश्येच्छुद्धस्फटिकवत्प्रभुम् ॥ ३३

तुरीयातीतममृतं निष्कलं निरुपप्लवम्।

न बाह्याभ्यन्तरे तच्च स बाह्याभ्यन्तरस्थितम् ॥ ३४

आदिमध्यान्तरहितमानन्दस्यापि कारणम्।
मात्रास्तिस्त्रस्त्वर्द्धमात्रं नादाख्यं ब्रह्मसंज्ञितम्॥ ३५
सर्गकर्त्ताह्यकाराख्यस्त्वहं कर्त्ता महानभूत्।
उकाराख्यस्तयोर्नित्यमनुग्रहकरोऽभवत्॥ ३६
मकाराख्यो विभुर्बीजी ह्यकारो बीज उच्यते।
उकाराख्यो हरिर्योनिः प्रधानपुरुषेश्वरः॥ ३७
बीजी बीजश्च योनिश्च नादाख्यः परमेश्वरः।
बीजी विभज्य चात्मानं स्वेच्छया संव्यवस्थितः॥ ३८
अस्य लिङ्गादभूद्बीजं मकाराद्बीजिनः प्रभोः।
उकारयोनौ निक्षिप्तमभवत्तत्समन्ततः॥ ३९
सौवर्णमभवत्ताण्डमावेष्ट्याण्डन्तदक्षरम्।

एवं चतुर्द्धा विभक्तः प्रणवो बिन्दुना पञ्चमात्रः शक्ति शान्ताभ्यां सप्तमात्रः। शक्तिर्ध्वनिः प्लुतावस्था। शान्ता विरामावस्था। उत्तरगीतासु—अमात्रं शब्दरहितं स्वरव्यञ्जनवर्जितम्।
बिन्दुनादकलातीतं यस्तं वेद स वेदवित्॥ ४०

शिवशास्त्रे द्वादशविभागेन स्मर्य्यते।
स्वच्छन्दे—अकारश्च उकारश्च मकारो बिन्दुरेव च।
शक्तिश्च व्यापिनी चैव समनैकादशी स्मृता॥ ४१
उन्मनी च ततोऽतीता तदतीतं निरामयम्॥ ४२

विशुद्धसंज्ञके शरम्भेषु अकारोकारबिन्दुस्थितिः अर्द्धसम्बन्धिमकारस्तस्य निरोधाख्ये केशारम्भस्योपरिदेशे तत्रैव बिन्दोरन्तर्भावस्तदुपरि नादः। एवं कुलपदस्यान्तर्भावस्तदुपरि नादान्तःस्थानशक्तिव्यापिनी समना। उन्मनीस्थानं निरामयं ध्रुवमण्डलम्। तत्र सोमलोकः वायवीये लोकानुक्त्वा।

तदूर्द्ध्वमुन्मनीलोकात् सोमलोकमलौकिकम् ।
सोमः सहोमया यत्र नित्यं वसति शाश्वतः ॥ ४३

समनास्थाने व्योमव्यापि तत्र नादान्तर्भावः तावत्परन्तु वक्ष्यमाणसदाशिवव्याप्तिहत इति अनेनाहतः मनस्यन्तउन्मनी-रूपेण द्रष्टव्य उन्मन्युपरिसोमः। याज्ञवल्क्ये—

अस्मिन्नर्थे वदन्त्येके मुनयो ब्रह्मवादिनः ।
प्रणवेनैव कार्य्याणि स्वे स्वे संहृत्य कारणे ॥ ४४
प्रणवस्य तु नादान्ते परमानन्दलक्षणम् ।
चेतसा संप्रपश्यन्ति सन्तः संसारभेषजम् ।
ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् ॥ ४५
अतः पञ्चधा विभागः प्रपञ्च्यते । वाशिष्ठे—
ह्लादिनीयं मकारान्ते बिन्दुरूपा प्रदृश्यते ।
बिन्दोरुपरि नादश्च शुद्धस्फटिकसन्निभः ॥ ४६
विशुद्धचेतसा शक्तिः स्वात्मेव प्रकाशते ।
असौ विश्वाधिको रुद्रो महर्षिः कृष्णपिङ्गलः ॥ ४७
संदृष्टमिच्छतस्तस्य ऋषिरोङ्कारसंज्ञिकः ।
ओङ्कारो वाचकस्तस्य वाच्यो रुद्रो घृणानिधिः ॥ ४८

जगत्कारणभूतायाश्चिच्छक्तेस्त्र्यध्वजगदुपादानभूतास्तिस्रः शक्तयः। आद्या शिवतत्त्वमयी कुण्डलिनी शुद्धाध्वगताखिल-तनुभुवन-भोगोपकारणानामुपादानभूता-शक्तिसदाशिव महेश्वर--शुद्धविद्येति चत्वारि तत्त्वानि समुत्पादयति प्रणवस्य शान्त्य-तीतकलया व्याप्तानि। एवं द्वितीया सा परा माया मिश्राध्वनः कालनियतिविद्यारागपुरुषरूपषट् तत्त्वानि विद्याकला व्याप्तानि। एवमपरशक्त्यापि अशुद्धाध्वनः महदादिक्षित्यन्तानि

जड़ानि त्रयोविंशतितत्त्वानि प्रतिष्ठानिवृत्तिकलाख्यामानि। तत्र ब्रह्माण्डरूपपृथिवीतत्त्वं ब्रह्माधिष्ठानं निवृत्तिर्व्याप्य तिष्ठति। एवं जलाद्यव्यक्तान्तत्रयोविंशतितत्त्वं विष्णवाश्रयं प्रतिष्ठाकला। एवं पुरुषादिमायान्तं विद्याकला। शुद्धविद्यामहेश्वरी शान्ति-कला। सदाशिवशक्तिः शान्त्यतीता कलेति। तथाच वायवीये—

शक्तिः प्रथमसम्भूता शान्त्यतीतपदोत्तरा।
ततो माया ततो व्यक्तं शिवाच्छक्तिमतः प्रभो!॥ ४९
शाम्भवेति शान्त्यतीतपदं शक्तिस्ततः शान्तिपदं क्रमात् ॥५०
ततो विद्यापदं तस्मात् प्रतिष्ठापदसम्भवः।
निवृत्तिपदमुत्पन्नं प्रतिष्ठापदतः परम् ॥ ५१
एवमुक्ता समासेन सृष्टिरीश्वरचोदिता।
आनुलोम्यात्थैतासां प्रातिलोम्येन संहृतिः ॥ ५२
तस्मात् पञ्चपदोद्दिष्टा न सृष्टान्तरमिष्यते।
कलाभिः पञ्चभिर्व्याप्तं यस्माद्विश्वमिदं जगत् ॥ ५३
अव्यक्तं कारणं यत्तत्तदात्मना समधिष्ठितम्।
पञ्चपादं पितरं द्वादशारमितिश्रुतेः॥ ५४

पञ्चपादाः सदाशिवाद्याः अंशा यस्य पितरमीश्वरमिति पञ्चारं चक्रं परिवर्त्तते। पृथु हिरण्यज्योतिरिति श्रुत्यन्तम्।

शैवे च प्रणववाच्यानि सदाशिवादीन्युक्ता—
इदं खलु जगच्चक्रं श्रुतिविश्रुतवैभवम्।
सद्यादिपञ्चावयवं पञ्चारमिति कथ्यते॥ ५५

मनुस्मृतौ। प्रशासितारं सर्वेषामणीयांसमणीयसाम्।
रुक्माभं स्वप्नधीगम्यं तं विद्यात् पुरुषं परम्॥ ५६
एष भूतानि सर्व्वाणि पञ्चभिर्व्याप्य मूर्त्तिभिः।

जन्मवृद्धिक्षयैर्नित्यं संसारयति चक्रवदिति ॥ ५७

वायवीये—मूर्त्तयस्तस्य विख्याताः पञ्च ब्रह्माह्वयाः पराः ॥ ५८

वायुसंहितायाम्—आद्या माया परा शक्तिश्चिन्मयी शिवसंश्रया।

यामाहुरखिलेशस्य तैस्तै रनुगुणागुणैः ॥ ५९

सैका परमचिद्रूपा शक्तिः प्रसवधर्मिणी।

विभज्य बहुधा विश्वं विदधाति शिवेच्छया ॥ ६०

सा मूलप्रकृतिर्माया त्रिगुणा त्रिविधा भवेत्।

शिवाद्यवनिपर्य्यन्तं यया ततमिदं जगत् ॥ ६१

एकधा बहुधा सैव तथा शतसहस्रधा।

शक्तयः खलु विद्यन्ते बहुधा व्यवहारतः ॥६२

शिवेच्छया परा शक्तिः शिवेन त्वेकताङ्गता।

ततः परिस्फुरन्त्यादौ सर्गे तैलन्तिलादिव ॥६३

ततः क्रियाख्यया शक्त्या शक्तशक्तिमदुत्थया।

तस्यां विक्षोभ्यमानायामादौ नादसमुद्भवः ॥ ६४

नादाद्विनिःसृतो बिन्दुर्बिन्दोर्देवः सदाशिवः।

तस्मान्महेश्वरो जातः शुद्धविद्यामहेश्वरात् ॥ ६५

सा वाचामैश्वरी शक्तिर्वागीशाख्यस्य शूलिनः।

या सा वर्णस्वरूपा सा मातृकेति विजृम्भते ॥ ६६

अथापराभवन्माया सैव कालमवासृजत्।

नियतिञ्च कलां विद्यां कलातो रागपूरुषौ ॥ ६७

माया तु पुनरेवाभूदव्यक्तं त्रिगुणात्मकम्।

त्रिगुणाच्च ततो व्यक्ताद्विविक्तास्तु त्रयो गुणाः ॥ ६८

गुणेभ्यः क्षोभ्यमाणेभ्यो गुणेशाख्यास्त्रिमूर्त्तयः।

अभवन्महदादीनि तत्त्वानि च यथाक्रमम् ॥ ६९

तेभ्यः पराण्डपिण्डानि चासंख्यानि शिवेच्छया।
अधिष्ठाता त्वनन्ताद्यै विश्वे शैश्वक्रवर्त्तिभिः ॥ ७०
शरीरान्तरभेदेन शक्तेर्भेदः प्रकीर्त्तितः।
रुद्रस्य रौद्री सा शक्तिर्विष्णोर्वैष्णव्यपि श्रुता॥७१इत्यादि।
किमत्र बहुनोक्तेन यद्विश्वमिति कीर्त्तितम्।
ज्ञानक्रियाचिकीर्षाभिस्तिसृभिः स्वात्मशक्तिभिः ॥७२
शक्तिमानीश्वरः शश्वद्विश्वं व्याप्याधितिष्ठति।
इदमित्थमिदं नेत्थं तावदित्येवमादिकाः ॥ ७३
इच्छाशक्तिर्महेशस्य नित्या कार्यनियामिका।
ज्ञानक्रिया चिकिर्षाभिस्तिसृभिः स्वात्मशक्तिभिः ॥७४
प्रयोजनञ्च तत्तेन बुद्धिरूपा व्यवस्यति।
यथेप्सितं क्रियाशक्तिर्यथा व्यवसितञ्च तत् ॥ ७५
कल्पयत्यात्मनः कार्य्यं क्षणात्सङ्कल्परूपिणी।
यथाशक्तित्रयात्मानं शक्तिप्रसवधर्मिणी ॥ ७६
शक्त्यापरमयात्मानं प्रसूते सकलं जगत्।
येयमुक्ता विभूतिर्वै प्राकृते सापरा मता ॥ ७७
अप्राकृती परा चैषा विभूतिः पारमेश्वरी।
सैवेह परमं धाम सैवेह परमा गतिः ॥ ७८
सैवेह परमा काष्ठा विभूतिः परमेष्ठिनः।
तां प्राप्तुं प्रयतन्त्यत्र जितश्वासा जितेन्द्रियाः ॥ ७९
संसाराशीविषालीढ़मृतसञ्जीवनौषधम्।
विभूतिं शिवयोर्विद्वान् न बिभेति कुतश्चन ॥ ८०
यः परामपराञ्चैव विभूतिं वेत्ति तत्त्वतः।
सोपराभूतिमुल्लङ्घ्य पराभूतिं समश्नुते ॥ ८१

विष्णुपुराणे—सर्व्वभूतेषु सर्व्वात्मन् ! या शक्तिरपरा तव।

गुणाश्रया नमस्तस्यै शाश्वता ये सुरेश्वराः ॥८२

यातीतगोचरा वाचां मनसाञ्चाविशेषणा।

ज्ञानिज्ञानपरिच्छेद्यां तां वन्दे चेश्वरीं पराम् ॥ ८३

तथा नित्यैव सा जगन्माता विष्णोः श्रीरनपायिनी।

मार्कण्डेये—नित्यैव सा जगन्मूर्त्तिरित्यादि। जगदेव यस्या मूर्त्तिः न जगन्मात्रस्वरूपा तदयं संक्षेपतः प्रणवस्यासंहिताकाले एते विभागाः, संहिताकाले एको वर्णः एकं पदं तस्याखण्डस्य परमेश्वरे शक्तिः तस्य वाचकः प्रणव इत्यादिसूत्रात्। इयन्ते मूर्त्तामूर्त्तसाधारणा प्रणवभावना समुपदिष्टा, प्रणवानधिकारिणान्तु तत् सदृशार्थकस्मृतितन्त्रोक्तहंसपञ्चाक्षरीमन्त्रादिषु तदर्थकल्पनया भावनीयाहंसत्र त्यकभावात्सोऽहमिति स्यात् हसोर्लोपाद्दोमिति निष्पन्नात्मा जीवं कुरुते शिवात्मानम्।

ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना।

अन्ये साङ्ख्येन योगेन कर्म्मयोगेन चापरे ॥ ८४

अन्ये त्वेवमजानन्तो श्रुत्वान्येभ्य उपासते।

तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः ॥८४

तस्मात् साक्षात्कारेऽपि ब्रह्मास्मीति ब्रह्माहमस्मीत्यनुभवं विनापि निर्गुणे सगुणे वापि परमात्मोपासनं ब्रह्माहमित्यनुभवहीनो ब्रह्माहमित्युपासीतवाक्यादपि वाक्यार्थं प्राप्नुया स्यादनुभवारूढ़ः। तदर्थमेव कानि चित्पद्यानुच्यन्ते।—एको जातो भौतिकन्त्वाकृतिमेत्यमध्ये मित्रामित्र कलत्रादिममत्वेति। मोहाद्यात्मा भाति मरिष्याम्यहमेतद्वित्वा देहञ्चापि ततोऽन्योस्म्यहमेकः। ८५ नेत्रश्रोत्राद्ये च समस्ते सुविलीने चित्ते बुद्धौ चाह-

मिति सम्यक् सुषुप्तौ। अज्ञानान्तः कोप्यहमेकः परिशेषात् सत्योनित्योस्मीति विमर्शात् परिवेद्मि।८६ नानाकारैः स्वीयविकारैः सह चित्तमुत्थायोत्थायव मयीत्थं लयमेति। अम्भोराशौ बुद्बुदभङ्गादिवदेकस्तस्मान्नित्यो भाम्यचलोऽहं खलु कोऽपि। ८७ नाहं भूतानीन्द्रियवर्गो न मनो नो नाहन्नैव च बुद्धिः प्रकृतिर्वा।नाहं देहो नैव च देही त्ववशिष्टो मोहाज्ञावाङ्मासि चिदात्मा परिपूर्णः।८८ दृष्टं सर्व्वं दृष्टविनष्टं सु निकृष्टं द्रष्टा चाहं दृश्यवशान्नैव यथार्थम्। द्रष्टृदृश्यस्यापि आत्मा त्वविकारः सर्व्वाधारश्चिन्मय एकः स शिवोहम्। ८९ मायास्वप्नं स्वान्तं विलासोपममेतज्ञ्तग्रामं दर्शयतीत्थं खलु यान्तः। माया ह्येषा दृष्टविनष्टा च निकृष्टा सत्यज्ञानानन्दमयोहं शिव एकः। ९० ब्रह्माण्डानां कोटय एते सहभूतैर्मय्येवान्तर्भान्ति प्रतिबुद्धेः। मायावेशान्नित्यविकाशो वियदाभो बुद्धः शुद्धो भाम्यहमेकः शिव एव।९१ शक्तग्रासात् कल्पितमन्तःपुरमेतद्योह्लासोन्तर्वाह्यत एकः परमात्मा। ब्रह्माद्या यत्किङ्करवर्ग्याः श्रुतिराज्ञा माया राज्ञी ललितपादः स परेशः। ९२ ज्ञानैश्वर्यस्यावधिभूतो न स भूतोऽभूतक्लेशः कर्म्मविपाकाद्यविमृष्टः। शक्तिक्रमस्वान्तप्रकृतान्तर्जगदन्तर्गूढो मूढायं न विदुर्ह्यवरूढम्। ९३ द्रष्टा स्रष्टा ह्युपदेष्टा परिपोष्टा शास्ता शस्ताऽपाम्तसमस्ताद्यविलेयः। साक्षी रक्षी भक्तजनानां प्रतिपक्षी विघ्नौघानाङ्क्षीणविपक्षः स किलैकः। ९४ बुध्नेशानौ यज्ञहुताशौ रविचन्द्रौ प्राणाकाशौ क्ष्मा मनोम्बुधियौ हृत्प्रकृतिश्च। विद्याविद्याशक्तिरमाशौः कमलाद्या देव्यो देवाः स हि सततैको बहुरूपः। ९५ सर्व्वाधीशः सर्व्वनिवासः सकलात्मा सर्व्वाध्यक्षः सर्व्वभवानामपि साक्षी। सर्व्वव्यापी सर्व्वहृदन्तः स्व-

निगूढ़ः सर्व्वातीतः सर्व्वविरेकः स हि सर्व्वः। ९६ ज्ञानाकाशो नित्यविकाशोऽनवकाशः शुद्धो बुद्धो नित्यविमुक्तोऽप्यविमुक्तः। सर्व्वस्यान्तः कान्ततरान्तः सकलानां सत्तामात्रो नित्यपवित्रः स शिवोऽहम्। ९७ ज्ञानज्ञातृज्ञेयभावादतीतो नित्योऽमीषां शश्वदस्तोदयश्चः। आत्मज्योतिर्निर्विकारः स साक्षी सच्चिन्मूर्त्तिर्यः शिवः सोहमस्मि। ९८ आब्रह्मान्तस्तम्बभावत्रयाणामाविर्भावादीचकस्तद्विहीनः। आत्मज्योतिर्ज्योतिषां ज्योतिरेकः सच्चिन्मात्रो यः शिवः सोहमस्मि। ९९ जाग्रत्स्वप्नाद्येषु भावेष्वभावः प्राभाभस्तान् भासयन् भासते यः। चैतन्यात्मा यस्तुरीयोस्ति सिद्धो भावाभावाभ्यामभाव्यः स शिवोऽहम्। १०० सर्वचेते भासते भासयन्यो चेत्राखेकः चेतिकश्चात्मतुल्यम्। चेचज्ञात्मेत्युच्यते यश्च पूर्णः सत्यज्ञानानन्दरूपः शिवोहम्। १ येनाक्षाणि स्वान्तमुख्यानि शश्वज्जानन्ति स्वं ज्ञेयमज्ञानि चैतत्। येनाह मिथ्येव भाति स ज्ञानात्मा सत्यरूपः शिवोहम्। २ योसावेकः पञ्चकोशान्तरात्मापञ्चानन्देष्वन्तरानन्द एकः। यो भात्येकः पञ्चभूतेष्वभूतो भूतावासः सोऽन्तरात्मा शिवोहम्। ३ भूषाकारस्त्यागतः स्वर्णवद् यः सत्यश्चैको भासते शुद्ध एव। सर्व्वोपाधित्यागतः प्रत्यगात्मा स स्वानन्दज्ञानमात्रः शिवोहम्। ४ सत्यज्ञानानन्तमानन्दमेकं यं ब्रह्मेति ब्राह्मणा व्याहरन्ति। नाशोत्पत्त्यावर्जितं नाशवत्स्तु सोहं साक्षात्पूर्ण आत्मा शिवोहम्। ५ अव्यक्तादि स्वप्रपञ्चं नभोव यो व्याप्नोति स्वप्रकाशैकरूपः। मृन्मृत्कार्य्याणीव वस्त्रञ्च सूत्रं सोऽनन्तात्मा चित्स्वरूपः शिवोहम्। ६ आनन्दात्मा केवलः सत्स्वरूपः पारावारः प्रख्यएको ह्यपारः। यस्यानन्दञ्चोपजीवन्ति सर्वे सोहं देवः सच्चिदानन्दरूपः। ७ तत्व

भावादभ्यतीतः पदार्थात् सत्तामात्रो नित्यमुक्तस्वभावः। आत्मा सत्यः केवलो निर्व्विकारः सोहं साचात्कृ अरेवास्मि नान्यः।८
एवं सोहम्भावमासाद्य भक्तः स्वीयं स्वं प्राक् तत्र बुद्ध्या समर्प्य। श्रद्धा मित्रो ध्यानयोगी पवित्रो युक्तो भूयाद् योगधर्मेषु शक्तः।९

कुमारावप्येवं ज्ञानयोगादिश्रवणेन कृतार्थान्तरावपि किञ्चित्-संशयानौ जगदुपकाराय पप्रच्छतुः।

कदा वयम्भविष्यामो ज्ञानिनो योगतत्पराः।
कदा विरक्ता स्याम स्त्यक्ताशेषपरिग्रहाः॥ १०
कदा वा सम्भजिष्यामो भगवन्तं जगद्गुरुम्।
कदा स्वरूपं वेत्स्यामो यास्यामः परमाङ्गतिम्?॥ ११

अहो! न सङ्ख्यां स्मृतिः प्रविज्ञः सम्मोहिताः केन च वेति विज्ञः।
कुतः क्व वा के च वयं क्व यामः कथं कदा बोधमितो व्रजामः॥१२
सङ्कल्पतो वास्य तु शिल्पतो वा स्वभावतो वा भव एष भाति।
मोहोऽथवा स्वप्नदशा सुदीर्घा किं वा मनोराज्यमहो! भ्रमो वा॥१३

मुनिरुवाच।

सङ्कल्पसिद्धिस्त्वियमेव शक्तिः शिल्पादिसिद्धिस्त्वियमेव बुद्धिः।
अज्ञानविज्ञानबलाबलेयं प्रवर्त्तते चिच्छवला स्वभावात्॥ १४
अबुद्धिजेशानुगृहीतशक्तिः पुरातनी तत्त्वमयी स्वशक्तिः।
सतात्मिकात्मादि पुमान्निजांशैर्विनिर्म्ममे बुद्धिसखो हि शिल्पैः॥१५
शक्तिश्चाद्या त्रिगुणेशी स्वभावात्मातिवैतांस्तनुजान् दृष्टदोषान्।
बध्नात्युच्चैस्ताड़यन्ती प्रसन्ना दत्ते भोगान्मोचयत्येव शान्ता॥१६
सर्वज्ञोसौ तत्स्वईशोप्यनादिः सर्वं ज्ञानन्तस्य पाणिस्थमेव।
सर्व्वस्रष्टा सर्व्वभावान्तकारी सङ्गासृष्टेस्तेन सृष्टा किलास्ति॥१७

मोक्षधर्मे, भीष्म उवाच—

नास्त्यनन्तं महाराज ! सर्व्वं सङ्ख्यानगोचरः ।
पुनर्भावोऽपि सङ्ख्यातोनास्ति किञ्चिदिहाचलम् ॥ १८
न चापि मन्यते राजन्नेष दोषोऽप्रसङ्गतः ।
उद्योगादेव धर्म्मज्ञाः कालेनैव गमिष्यथ ॥ १९

तत्रैव प्रजाविसर्गस्य परिमाणमित्यारभ्य द्रष्टव्यम् । माया चास्याधिकारिप्रभेदाद्विचित्रैवाभाति नश्यमानापि ।

शास्त्रज्ञानान्मोहवत्तुच्छरूपा साक्षात्कारे स्वप्नवज्ञात्यलीका ।
चित्ते रुद्धे चित्तराज्यं व नश्येत् कैवल्याप्तौ भ्रान्तिवत्क्वापिलीयेत् ॥ २०

पुनः कुमारावूचतुः—अस्तु नाम सङ्ख्याजीवसृष्टिः स्वकर्म्मणा परिभ्रमणाणानां मादृशामतिशयजन्मजरामरणरोगशोकादि-पीड़ितानां कियता कालेन सङ्ख्यां दर्शयिष्यतीत्यविदुषान्द रत्वया व्यथैव ?

वैषम्यनिर्घृणे नस्तस्य यद्यपि धूर्ज्जटेः ।
तथापि कर्म्मसापेक्षः कदास्मान्मोचयिष्यति ? ॥ २१

मुनिरुवाच—वैषम्यनिर्घृणे नस्तः सत्यं तस्य महात्मनः ।
एवं सत्यैवमत्राणातु चैवमस्यादिकल्पना ॥ २२
न मोचयति बध्नाति जीवानीशः स्वभावतः ।
स्वभावएष त्वज्ञानाद्बद्धो ज्ञानात् प्रमुच्यते ॥ २३
सर्व्वोपायपरिभ्रष्टो हृदाप्याश्रित्य मामिह ।
दुर्गन्तरतु सर्व्वस्त्येत्यस्य शेषास्ति कल्पना ॥ २४
पशुपालः पशु रक्षन् पीड़यन्नातिपीड़येत् ।
पशूनस्मान् पशुपतिर्नोति संपीड़यिष्यति ॥ २५
सङ्ख्यायासङ्ख्यया किन्ते किमन्यैर्य कुहेतुभिः ।

सङ्कोषा संसृतेर्भक्त्या यदस्य सकृदाश्रयः ॥ २६

सर्व्वज्ञः परमकारुणिकः अविषमः सर्व्वजीवोद्धाराय कृत-प्रतिज्ञः स ज्ञानदानेन मोक्षयिष्यति। येनातिसुगमो भक्तियोगो दर्शितः अतिशीघ्रसमुद्धरणाय। तथाहि।—

तारयति ज्ञानेन च स भावभक्त्या क्रियादियोगैस्तैः।
अनधिकृतानप्यलसान्निजनामस्मरणयोगेन ॥ २७

वर्णविवर्णान् म्लेच्छान् पतितान् पशुपक्षिकीटगुल्मादीन्।
सर्व्वोपायविहीनान् काश्यान्तारयति तारदानेन ॥ २८

यत्रात्मानं निक्षिपत्यस्य भक्त्या त्रातारन्तं वृणुते वा कथञ्चित्।
रक्षत्येषाशेषसंसारदुर्गाद्दुर्गाधीशोदुर्गतानाञ्च मित्रम् ॥ २९

देवश्चासौ पूर्व्वजः क्रीड़कोऽपि सत्वैः सत्वाधीश्वरः सत्ववासः।
रक्षां कुर्य्यान्नः कृपायानिवासः सर्व्वावासत्वादतोनास्ति भीतिः॥३०

ये जैवसत्त्वे त्रिगुणे सत्त्वशुद्ध्या मोक्षप्रेक्षा जायतेन्तः कदापि।
मोक्षेच्छातस्तद्विचारो विचाराद्बुद्धेः सौक्ष्म्यं प्राप्यते सूक्ष्मबुद्धेः॥३१

सत्वापत्तिस्तेन निःसङ्गता स्यान्निःसङ्गात्मा मुच्यते भावहीनः।
शुद्धाहारात् सत्त्वशुद्धिः कदा चेत्तत्संशुद्ध्या संसृतेर्ग्रन्थिमोक्षः ॥३२

मुक्तग्रन्थिं निष्कषायन्तमोभिः पारन्देवो दर्शयेदाह—वेदः।
भ्रान्त्वाभ्रान्त्वा कृष्णनीलादियोनीर्भूयोभूयःश्वेततोभ्येतिकृष्णम्॥३

तस्मिन् क्षेत्रे जातसद्वासनायाः वृद्ध्या बद्धो मुच्यते कालयोगात्।
दैवाद्याता योगजा वासना चेदन्या सृष्टेर्वासना नाशयन्ती ॥ ३४

योगाद्योगं प्रापयन्ती क्रमेण यावत्सिद्धिर्वर्त्तते नैति नाशम्।
स्वत्या हीयोदेति चेत्साधुदृष्ट्या रेखेवेन्दोः सर्द्धमानानुवेलम् ॥ ३५

हित्वा सम्यक् हृन्निशीथ्यत्तमोघं पूर्णात्मानं दर्शयत्येव कालः।
वर्षौघोदैर्वर्द्धमाना नदीव स्त्रोयाध्वानं स्वीयवेगात्करोति ॥ ३६

योगाद्योगो वर्द्धते सङ्घते च सर्वामित्रैर्नीतिविघ्नायकाभः ।
एकःप्राज्ञः प्राप्यराज्यः कुलन्द्राक् पूर्व्वामात्यांश्चाभिभूयात्स्वनीत्या ३७
एवञ्चैका योगजा वासनान्याश्चाविद्योत्था वासनाश्चाभिभूयात् ।
नोज्झत्येषा संयमी तारमग्रे जन्मस्वेवं सुव्रता कामिनीव ।
भावैस्तैस्तैर्यौवनस्थेव बाला स्वात्मारामं योगिनन्तङ्करोति ॥३८

स्वल्पोऽपि योगसंस्कारो भवसंस्कारहा न चेत् ।
अनाद्यविद्यासंस्कारे कथं विद्योदयः क्रमः ॥ ३९
स्वल्पोऽप्यग्निर्दहेद्वन्यां स्वल्पो दीपस्तमश्चयम् ।
हन्ति योगस्तथा स्वल्पो भवसंस्कारमन्ततः ॥ ४०
दैवतो वासना तात ! योगजाङ्कुरिता यदि ।
वर्द्धतेऽमरवल्लीव विच्छिन्नापि मुहुर्मुहुः ॥ ४१
वैराग्यं दृढमालम्ब्य शमरभ्यसतस्ततः ।
संस्कारो जायते तात ! संस्कारादपि वासना ॥ ४२
भाववत्प्रेयसोस्ते वर्द्धतेऽस्तः परस्परम् ।
शिववासनया तन्व्या धिक्कृता भववासना ॥ ४३
शिथिलप्रेमबन्धत्वाज्ज्ञानिनीवैति नान्तिकम् ।

योगप्राप्तेः कारणं साधुसङ्गो योगभ्रंशे सङ्ग एव ह्यसाधोः ।
तस्मान्नित्यं साधुसङ्गेन भाव्यं नैवासाधोःसङ्गवान् स्यात्क्षणार्द्धम् ॥४४
हन्ताविद्यावशतो मोहमेति मोहात्पापं तत एवातिदुःखम् ।
दुःखात्तीव्रात्मुक्तिच्छापि जातु सत्सङ्गार्थी जायते कैश्च पुण्यैः ॥४५
सद्भिः सङ्गो सङ्गतोऽधीविचारो दोषप्रेक्षा संसृतेभीर्मुमुक्षा ।
आस्तिर्भक्तिः सद्गुरोः शब्दलाभस्तद्वास्यत्तिस्तद्विचारः पुनश्च ॥ ४६
ध्यानाभ्यासः प्राप्तिरत्यागसिद्धिस्तेनोत्तारस्तीव्रसंसारसिन्धोः ।
सद्भिःप्यैतत् तात ! मोक्षक्रमस्ते व्याख्यातोऽयं पूर्वशिष्टोपदिष्टः ॥४७

ततः कुमारावूचतुः—

किं जीवभोगाय जगद्विधाता किं क्रीड़या वा विदधाति भूयः ।
सृष्टिं विचित्रामिति संशयं मे छिन्धि त्वमत्यन्तविशारदोसि ॥४८

मुनिरुवाच—

सत्यमस्य पूर्णकामस्य निरोहत्वाज्जीवा दृष्टभोगायैव भवन्त्वं भविष्यतीति सम्भाव्यते, किन्त्वसौ कारुणिको सर्व्वं जगदुद्धरिष्यामीति कृतप्रतिज्ञः प्राकाम्यसिद्धिमान् कथं युगपत् सर्व्वान्नोद्धरिष्यति ? मोक्षः स्वप्रज्ञयैव लभ्यश्चेत् कथं तादृशी प्रज्ञैषां शीघ्रं भवत्विति ? न सङ्कल्पयति सत्यसङ्कल्पः ? बुद्धिरपि तदधीना, बुद्धेः प्रेरकत्वेन यतोयं श्रुतः—'जीवादृष्टवशान्न तादृशीच्छास्य जायते'—इति चेद्स्वतन्त्रतायाति । उक्तञ्च—
'सर्व्वज्ञता तृप्तिरनादिबोधिका स्वतन्त्रता नित्यमलुप्तशक्तिः ।
अनन्तशक्तिश्च विभोर्विधिज्ञा षडाहुरङ्गानि महेश्वरस्य ॥' ४९

तस्मादुपगम्यते जीवजीवकर्म्मतज्जादृष्टफलभोगभोजयितृत्वादिकल्पनया संसारचक्रं परिवर्त्तयन् क्रीडति ; प्रयोजनाभावादपि प्रत्यक्षमहाराजस्येव मृगयादिव्यापारादिना क्रीडाश्रमस्वीकारोस्य भवति । उक्तञ्च सूत्रकारेण—'लोकवत्तु लीला कैवल्यमिति । तथा श्रूयते च वेदेषु । मोक्षधर्मे—

एते प्रधानस्य गुणास्त्रयः पुरुषसत्तम ! ।
कृत्स्नस्य सर्व्वजगतो तिष्ठन्त्यनपगाः सदा ॥ ५०
अव्यक्तरूपो भगवान् शतशोथ सहस्रशः ।
कोटिशश्च करोत्येष प्रत्यगात्मानमात्मना ॥ ५१
प्रकृतिर्गुणान्विकुरुते स्वच्छन्देनात्मकाम्यया ।
क्रीड़ार्थन्तु महाराज ! शतशोथ सहस्रशः ॥ ५२

यथा दीपसहस्राणि दीपामर्त्याः प्रकुर्व्वते ।
अव्यक्तस्थं परं यत्तु तत्स्यदृत्यभिधीयते ॥ ५३
अचेतना सापि मता प्रकृतिः सापि पार्थिव ! ।
एतेनाधिष्ठिताप्येवं सृजते संहरत्यपि ॥ ५४

कुमारावूचतुः—

नानाचारविचारचित्रितमतैर्नानाध्वनि भ्रामितै-
र्नानाशास्त्रग्रहगीति विग्रहपरैः सविग्रहासङ्कृहैः ।
सर्व्वं व्याकुलितं परस्परमतं सन्दूषयद्भिर्मतं
तत्ते किन्नु सु सम्मतं वद गुरो ! यत्क्वापि नासम्मतम्॥५५

मुनिरुवाच—

यस्येदं प्रकटं विभाति हि जगद्राज्यं महद्भूपजौ !
तद्भूतैर व्यवहारदर्शनकृते भावे च तच्छासनम् ।
तद्वेदागमसाङ्ख्यशङ्करमतं सत्यञ्चरात्रं तथा
योगं विद्धि यदीशमागमयति श्रेष्ठः स एवागमः ॥ ५६

उक्तञ्च मोक्षधर्मे—साङ्ख्यं योगं पाञ्चरात्रञ्च वेदाः पाशुपतन्तथा ।
ज्ञानान्येतानि राजेन्द्र ! विद्धि नारायणात्मकम् ॥
न चैनमेवं जानन्ति तमोभूता विशाम्पते ।
तमेव शास्त्रकर्त्तारं प्रवदन्ति मनीषिणः ॥ ५७

अतएव—

श्रुतिः प्रमाणं स्मृतयः प्रमाणन्ताभ्याञ्च शिष्टाचरणं प्रमाणम् ।
मतिः प्रमाणं विमला मनश्चैतानि यस्येह न स प्रमाणम् ॥५८

भिषङ्मुख्यानि शास्त्राणि प्रमाणं स्वस्वकर्म्मणि ।
यथा तथा मोक्षशास्त्रस्यापि मोक्षे प्रमाणता ॥ ५९
अपि नास्तिकशास्त्रं हि प्रमाणत्वं गमिष्यति ।

आस्तिक्यं सुदृढ़ीकर्त्तुं विदुषां पूर्व्वपक्षवत्॥ ६०
नास्तिका अपि नास्तीति प्रत्याययितुमक्षमाः।
तत्रास्तीत्यपि सन्देहः प्रामाण्यन्नैव मर्हति॥ ६१
रोगादिदुःखदारिद्र्यान्तेषामपि च पश्यताम्।
का हानिर्धर्म्मतो दुःखकारिणां तत्फलाशया॥ ६२
निषिद्धन्नाचरेत्तस्माद्विधिसिद्धं समाचरेत्।
यदि न स्यात् ततः किं स्यादस्ति चेन्नास्तिको हतः॥ ६३
इत्यादि श्रूयते शास्त्रकाराणां सम्मतम्मतम्।
भक्त्या तं शरणङ्गच्छेद्यच्छक्तिर्मोह ईदृशः॥ ६४
धर्म्मः स्वधर्म्मान्नपरो न शास्त्रं वेदतः परम्।
न प्रज्ञासदृशो लाभो न प्राज्ञसदृशः सुहृत्॥ ६५
अभीर्न ज्ञानसदृशी नाज्ञानसदृशो च भीः।
न रागसदृशं दुःखं न वैराग्यात्परं सुखम्॥ ६६
रागी करोति किन्नाद्यं विरागी किन्न संत्यजेत्।
ज्ञातुः सर्व्वं स्वहृदये ह्यज्ञातुर्दूरगः स्वयम्॥ ६७
न गच्छतः शोकमोहावदृष्ट्वादृष्टमस्थिरम्।
न पश्यन्ति परं तत्त्वमशास्त्रमयनो नरः॥ ६८
कृषिः शस्यं धनाद्धर्मं देहादात्मानमव्ययम्।
शास्त्रेभ्यस्तत्वमैशानमसारात्सारमुद्धरेत्॥ ६९
दैवायत्ते सुखे दुःखे हर्षेच्छोर्व्वेगवान्न यः।
नित्यात्मलाभसन्तुष्टः स सुखी स च पण्डितः॥ ७०
विसंवदन्तु शास्त्राणि विवदन्तु च वादिनः।
भ्रमन्तु भ्रान्तमतयश्चित्तशुद्धिं गच्छतत्पराः॥ ७१
विषयास्वादसंमग्नं जगदेतन्न संशयः।

नापैति विषयास्वादो ब्रह्मास्वादादृते परम्॥ ७२
यावन्नास्वाद्यते ब्रह्मामृतं विषयवासना।
विषशेषो नापयाति तावदन्यैश्चिकित्सितः॥ ७३
भक्तिं मायिनि युक्तिमात्मनि शिवे मुक्तिं पराक् सङ्गतः
सर्व्वप्राणिहिताकृतिस्त्वविकृतिं कामादिभिश्चेतसि।
ब्रह्मैकात्मविनिश्चयं गुणचयं मोक्षोपयुक्तं सदा
युञ्जानो न विमोदृतीह मतिमानेतत्सतां सम्मतम्॥ ७४
साक्षात् कोऽपि परम्परा च वचसा भङ्ग्यानुसङ्गादपि
सर्व्वैरेव हि योगसाङ्ख्यनिरतैर्वेदागमैर्वादिभिः।
पाषण्डैरपि खण्डकैरपि परं सारग्रहैरग्रहै-
र्ब्रह्मैकप्रवणं मनः प्रणयितुं स्वैः स्वैर्मतैर्दिश्यते॥ ७५
सर्व्वैर्ज्ञातपदैः कणादकपिलव्यासाक्षपादादिभिः
शिष्याणां मृदुमध्यतीव्रसुधियाम्बोधाय नाना ध्वनिः।
ब्रह्मव्याहृतमेकमेव बहुधा सिद्धान्तसिद्धं परं
निःसन्दिग्धमवैहि मुग्धमतयोमुह्यन्ति तैस्तैर्मतैः॥ ७६

नित्यं पुमात्मकमकृत्रिममादिसिद्धं
ध्यायन्ति कापिलमतानुगतास्तमेकम्।
तं यज्ञपूरुषमिति प्रयजन्ति यज्ञ-
कर्म्माश्रया विविधदैवतमन्त्रभेदैः॥
अन्ये स्मरन्ति तमुपास्यतयैवसिद्धं
चित्यादिकर्तृकतया च परे स्मरन्ति॥ ७७
सङ्कर्षणादिचतुरंशकमात्मतत्त्वं
तं वासुदेवमिति सात्वततन्त्रनिष्ठाः।

शैवाः शिवं भवमृडादिचतुःस्वरूपं
शाक्तास्त्रिशक्तिपरतश्चिदमात्मशक्तिम् ॥ ७८
स्वप्नजागरसुषुप्तितुरीयभावा-
तीता प्रतीतिमुपयान्ति समाधिशुद्धया।
या योगिनां परविरागयुजामजान्तां
सत्तां शिवां विमलमोक्षदमयीम्परे च ॥ ७९
सृष्टिस्थितिक्षयकरीतिरियन्त्यशेषं
स्वस्थानुगत्य कलया विकला स्फुरन्ती।
यैकास्ति भाति परमात्मसुखस्वरूपा
तां पञ्चशक्तिपरमाञ्च परे स्मरन्ति ॥ ८०
तं क्लेशकर्म्मपरिपाकविहीनमन्त-
र्निर्वासनं परममीश्वरमद्वितीयम्।
सर्व्वज्ञमज्ञजनपावनमात्मकृप्त-
धिक्तप्रकम्पितजगद्गुरुमामनन्ति ॥८१
ब्रह्मादिजीवपशुपाशविमोक्षदक्षं सत्कारणं पशुपतिं सततस्वतन्त्रम्।
कुर्व्वन्तमेतदपिकर्म्मविलेपशून्यन्तं भस्मपुण्ड्रकविधानविदः स्मरन्ति॥८२
तं शुद्धबुद्धं तं नित्यविमुक्तसच्चिदानन्दमात्मजमद्वयमप्रमेयम्।
मायाविवर्त्तपरहेतुमहेतुमेकमात्मानमौपनिषदाःपरिभावयन्ति॥८३
ताराङ्गपञ्चशिरसिप्रतिभाव्यमानंभूम्यादिपञ्चविधशक्तिपमप्रपञ्चम्।
आनन्दपञ्चकविमर्शसुसिद्धमक्षरानन्दमात्मजमव्ययमप्रमेयम् ॥८४
तंपञ्चपञ्चपरतोनिखिलात्मयोनिमात्मानमेवपरमंपरिभावयन्ति।
उक्तेषु यावदुपपन्नमचिन्त्यमेकमात्मानमच्चचरणाःसमुदीरयन्ति ८५
तस्मात्तमेकमखिलेशमचिन्त्यशक्तिमात्मानमेवविमलस्वयमाश्रयामः।
तत्स्वेच्छासुखसुकुचेतनाधृतीनां सङ्घातः प्रकृतिकृतोहिदृश्यरूपः ८६

चेतं स्याद्गुणभुगजः पुमांश्च तज्ज्ञःसाध्यं योजयतितयोर्महेश्वरात्मा,
भर्त्तैकःपरतरईश्वकोऽनुमन्ताचेतज्ञः सहि परमोखिलस्यं साचात्।
तद्ब्रह्मप्रकृतिपरम्परापरान्यत्तैगासन्नसदपि सर्वतोमुखन्तत् ॥८७

चित्ताद्यैरपि रहितश्च सर्व्वविच्च
सर्व्वाचैरपि रहितश्च सर्व्वतोऽचम्।
सर्व्वेषां परमपि सर्व्वरूपमेकं
सर्व्वस्थं क्व च न च संस्थितं प्रसिद्धम् ॥ ८८

आकाशंप्रभवतिसूक्ष्ममद्वितीयं भूतेषु प्रतिकृतिभिर्विभक्तवच्च।
दूरस्थं सविधमतीव सृष्टिरचासंहारप्रकृतिषुभासिलेपशून्यम्॥८९
सर्व्वान्तश्चरमचरं बहिश्च भास्वत्सर्वेषामपि महसांमहस्तदेकम्।
तत्पारे जयति तमोन्धमोहरात्रेस्तन्देवं शरणमुपेहि सर्व्वभावैः॥९०
तच्चित्तो भव सततं तदात्मबुद्धिस्तद्भक्तः प्रणतिपरस्तदेकयाजी।
तन्निष्ठो भव तदभीष्टलाभतुष्टोमोहाब्धिस्तवभवितैवगोष्पदाभः॥९१
हित्वान्तस्तदपरधर्मतःफलौघं तन्देवं शरणमुपेहि मास्तु भीतिः।
भोगात्त्वं विरतिमतिक्रतिं ररांस्त्वान्दातासोष्टतदयथानिरामयात्मा॥९२
सर्व्वज्ञो यइहसमस्तशक्तियुक्तःसर्वात्मासकलहृदिस्थितोस्तिसाची।
कारुण्योदनिधिरदृष्टदोषएकस्तं देवंशरणमुपेहि मास्तु भीतिः॥९३
योदेवोनिजहृदिमाययासमस्तान् यन्त्रआनिवजिज्ञमसङ्घ समसूत्रैः।
क्रीडन्भ्रामयतिविमोचयेत्प्रसन्नस्तं देवंशरणमुपेहिमास्तुभीतिः॥९४
योदेवोविविधकलाभिरात्तमूर्त्तिःकारुण्यात्परमुपदिशत्यनुग्रहात्मा।
तंभक्तामनसिसदाशिवंशिवायपेमार्ग्गःशरणमुपेहिमास्तुभीतिः॥९५

इति ते कथितं तात ! भगवद्भक्तिभावितम्।
ज्ञानं च योगकृत्यं च कृत्यमस्मान्न विद्यते ॥ ९६

बुद्धान्तः सारमुद्धृत्य योगवेदागमाम्बुधेः।
अमृतं युवयोर्हस्ते समास्वाद्यामृतो भव ॥ ९७
क्षीणाघे क्षीणरजसि पुण्यौघपरिपाकतः।
मतिरेतादृशी तात! जायते भवतोरिव ॥ ९८
आरूढ योगसोपानौ भवन्तौ दृढनिश्चयौ।
मा विषीदत संसिद्धिं क्रमेणैव गमिष्यथः ॥ ९९
अयमर्थः स प्रमाणः स व्याख्यानः सविस्तरः।
ज्ञानमाधुकरं चास्मत्तं गृह्य सम्यगीक्ष्यताम् ॥ १००

मुनिरुवाच—अत्र मया बाहुल्येन यदुक्तं तत्र सारतया किं गृहीतं किं निश्चितं तद्वद।

मधुव्रतउवाच—नाज्ञानाद्भयमन्यत्तु नाज्ञानाच्छत्रुरन्योऽस्ति।
तत्सर्वज्ञानुसृतेर्दूरीकार्यं न चान्यदस्ति करणीयम् ॥ १
जन्माद्यस्य यतो वा मायाभिर्वाविभाति यो बहुधा।
आश्रयणीयो भक्त्या ध्यातव्यः सोऽखिलैर्भावैः ॥ २

सुनन्दउवाच—

न ह्यात्मनः प्रियोऽन्यस्तदर्थमेतत्सदैव तं सकलम्।
उपास्यो यत्नात्सर्वोपायैः स एव मे बुद्धिः ॥ ३
मायामात्रमिदं खलु दृश्यं यत् क्षणद्वयस्थायि।
अवशिष्टं यन्नित्यं तथ्यं तदीक्षते चेतः ॥ ४
अस्मिन् बहुप्रकारे परमं ब्रह्मैव सेव्यमादिष्टम्।
एकमनेकोपायैस्तस्मान्नैकाग्रताहानिः ॥ ५

मुनिरुवाच—

प्रणतिप्रणयादिभिर्मुहुः कृपया चात्मतया वदामि वः।
न विषं पिब सर्पिवामृतं त्यज कामं भज राममीश्वरम् ॥ ६

शनै रोधय हृद्वृत्तीः शनैर्बोधय मानसम्।
शनैः शोधय चात्मानं त्वरन्नीशं समाश्रय॥
पापं क्षालय पालय स्वभगवत्प्रेमा मनो लालकम्।
देहं चालय विश्वनाथनगरीयात्राविधौ सर्व्वदा॥ ७
शास्त्रं साधुनिभालयस्व च कुतः कोऽहं क्व गन्ता।
क्व वेत्यन्तर्नित्यमतन्द्रितः परतरं ध्यानं समुत्तालय॥ ८
एवं कपोतमुनिना तयोरमलिनात्मनोः।
बोधिते पुरुषेऽनन्ते शरदेवात्मविद्यया॥ ९
उत्फुल्लदृष्टिकमलौ स्वच्छचित्तामृताशयौ।
मन्दोद्वेगनदीवेगौ हंसागमसमुज्वलौ॥ १०
रेजतुर्धरणीतुल्यौ धृत्या तौ धरणीशजौ।
भूक्तिर्भज्ज्ञानवैराग्ये ऐश्वर्यतपसीव तौ॥
मुनीनां प्रीतिजनकौ चेरतुस्तत्तपोवनम्। ११
सौधस्तुङ्गधराधरेन्द्रशिखरः सद्मानि तत्कन्दराः।
आरामोरमणीयकुञ्जविपिनं क्रीड़ासरो निर्झरः॥ १२
शय्यापल्लवपुष्पमय्यमलिना स्निग्धोनुकूलोनिलः।
प्रेयान् प्रीतिदयाधृतिप्रभृतयः संश्लेषभाजोऽङ्गनाः॥ १३
सैन्यं खड्गमृगादिकुञ्जरकुलं मञ्जुस्वरा गायना-
श्चित्राः पत्ररथास्तपोवनचरास्ते तापसा मन्त्रिणः।
वृक्षाएव निरूपिताः कुशसमित्पत्राम्बरावेक्षणे,
व्यासीत्तत्र वनेपि सम्पदखिला तारावती पुत्रयोः॥ १४
ततः। अनेनैव शरीरेण शिवयोर्दर्शनेप्सया।
मन्त्रोपदेशमिच्छन्तौ मुने! मुनिरुवाच—तौ॥ १५
वयं चतुर्थाश्रमिणो दीक्षायां नाधिकारिणः।

सन्ध्याचले वसिष्ठोऽस्ति स वां दीक्षयिता गृही ॥ १६

तौ मुनेर्वचनतो मुनिरूपौ कामशत्रुतनयौ कमनीयौ।
कामपीठपरिपूजनहेतोः कामरूपवसतिं ययतुर्द्राक् ॥ १७

तावुपेत्य परमेष्ठिनन्दनं तं वसिष्ठमवनीशनन्दनौ।
सम्प्रसाद्य विधिवच्च दीक्षितौ जेपतुः शिवमनुं सुसंयतौ॥ १८

त्र्यम्बकस्य करुणाभिरम्बिकामन्त्रकल्पमविकल्पमाप्य तौ।
भक्तितः श्रितशिवाङ्घ्रिपङ्कजौ चेरतुर्जपपरौ ततस्ततः ॥ १९

तौ विलोक्य मनुजेन्द्रकुमारौ कानने पदचरौ सुकुमारौ।
पर्वता अपि तदोदितबाष्पा रेजिरे क्षिमिव शोकभरेण ॥ २०

वीक्ष्य सानुजममुं घनकान्तं कान्तया गिरिदरीषु निषण्णः।
यातुधा तु तरुणी न रतिं द्राक् शङ्कया रघुपतेः प्रतिपेदे ॥ २१

मन्ये मेन स पराक्रमदृप्यौ तौ विभाव्य तरुणौ नरसिंहौ।
दानवेन्द्रकुलजागलदस्त्रा बभ्रमुः करिकुलानि च भीत्या॥ २२

दर्शनात्तरुणयोरनयोः प्राक् बालभास्कररुचोरचिरेण।
द्राक्कुलानि कुलपङ्कजिनीनां दृग्दलैरतिविकाशमवापुः ॥ २३

दर्शनात्तरुणयोस्तरलास्ताः संविलोक्य तनुजाश्च बधूश्च।
अङ्गणेऽपि च तयोरधिवासश्चोदुर्वत! जरद्गृहपालाः ॥ २४

मत्यकुञ्जरवरस्तरुणोयं तद्गगा वयमिह प्रतिपन्नाः।
वारणेन्द्रगतिमेत्य युवत्यश्चेतसा प्रथमजं परिवव्रुः ॥ २५

सोष्णभावमधिगम्य मनोभिः पूर्वजः परिहृतो न सुनन्दः।
बुद्धिमान् पततएव दृढाघोद्गावणेन हि कठोरशिलायाः ॥ २६

प्रेमतः परिणताः खलु काचित् कामचापलतिकेव नताङ्गी।
वाग्भिरिक्षुरसराशिवहाभिः प्रीणयत्यथ नृपात्मजमूचे ॥ २७

नास्ति सुन्दर! गृहे गृहपालोनास्ति वा नियमिताविषयेऽस्मिन्।

त्वं युवातिथिरसि स्मरधर्म्मं पालयाद्य वस मद्गृह एव ॥ २८
यद्विहाय तरुणीं तरुणस्त्वं हन्त ! मद्रमणवद्रतिमूढ़ः ।
बभ्रमीषि विषयेषु तदन्तः पीड़ितास्मि हृदयोद्भवदुःखैः ॥ २९
अम्बिकाचरणपद्मधूलीलम्पटमधुलिहोस्य न दृष्टिः ।
भावभङ्गिमधुराननपद्मे कामरूपसुदृशाम्निपपात ॥ ३०
कापि तं मधुकरव्यपदेशा संशयन्त्यथ मुहुरिदमुवाच ।
वीक्ष्य च चितिरुह कुटजाख्यं पुष्पितं मनसि पुष्पशरार्त्ता ॥३१
मुग्धभृङ्ग गुणरूपविहीने ब्रह्मणीव कुटजप्रसवे किम् ।
दत्तदृष्टिरथ नेच्छसि पातुं कामिनीं व दयितां नववल्लीम् ॥ ३२
दृष्टयः पुनरमुं मुनिचित्तच्छेदिका अपि न तु व्यथयन्ति ।
चित्तमस्य खलु वज्रशिलाभिर्निर्म्मितं वत ! विमूढ़विधात्रा ॥ ३३
विप्रयुक्ततरुणीहृदयापध्यानतोद्य रतिसङ्गवियुक्तः ।
मन्मथः खलु वसन्तसहायः सत्यमेष तरुणो भ्रमतीह ॥ ३४
इत्थमात्ममनसा सुदृशस्ताः सं विचिन्त्य परिलुप्ततदाशाः ।
क्लीविषादगमने गतिमन्दा बभ्रमुः स्मरविकारपदव्याम् ॥ ३५
कापि कामतरला तरुणान्तं पूर्व्वजातमथ भूपतिपुत्रम् ।
आससाद तरुणीतरुमूले राक्षसीव रघुवंश्ययुवानम् ॥ ३६
लोललोचनविचालनमुग्धा वक्रवाक्यरचनारमणीया ।
भावमान्तरमदर्शयदस्मै स्वच्छकाघटिकेव किलाम्भः ॥ ३७
कामोसि सत्यं कमनीयकान्तिस्त्वय्येव यस्माद्रतिमङ्गनानाम् ।
निक्षिप्य सर्व्वान् मयि पुष्पबाणान्निर्वाणभावं किमिहाश्रितोसि॥३८
भ्रूभङ्गमुग्धे गुणरूपसिन्धौ देहे त्वदीये ननु मानसं मे ।
सङ्कुह्य हा ! मन्मथभावभारमज्जत्स्वयं मज्जयतीह देहम् ॥ ३९
एवं सुभद्रा प्रियमुर्वशीव भावैर्वशीकर्त्तुमशक्नुवन्ती ।

विहर्तुंकामा खलु हर्तुमेनं सस्मार विद्यां मनसा सुसिद्धाम् ॥४०
तदीयसंस्पर्शसुखानुभूतिमवाप्तुकामा कमलायताक्षी।
सम्मन्त्य चित्ते न च मन्त्रशक्त्या क्षणाज्जगत्प्राणतनुं प्रपेदे ॥ ४१
निजाङ्गजेनोत्तमसौरभेन सा मोदयन्ती तरला तदङ्गः।
शुष्कं पतत्पत्त्रमिव प्रसह्य विहाय सा तं प्रजहार वेगात् ॥ ४२

तदनु तदनु जातो राजपुत्त्रः सुनन्द—
स्तदपरतरुमूलेसन्निषण्णोविषण्णः।
अहह! किमिदमेतन्नीयते केन वासौ
गुरुरपि लघुवत् किं कार्य्यमित्याकुलोऽभूत् ॥ ४३

न धनुरिह न वाणाः केवलं मन्त्रशक्त्या
किमिह खलु विधेयं केन वा स्तम्भयामि।
क्षणमिव मनसेत्थं चिन्तयित्वोच्चकैस्त-
स्वरवरपरिवृत्त्वेति शश्वद्दभाषे ॥ ४४

अथ नृपतिकुमारो मायया नीयमानो
मनसि धृतधरित्रीधारणा विष्णुमायाम्।
शरणमभजदन्तः सापि तस्याः प्रभावा-
च्छिखरिणि तुहिनाख्ये पातयन्त्यागभरार्त्ता ॥ ४५

अथ खलु निपतन्तं वत्सलावत्समेनं
निजकवचममुष्मै देव्युवाचाशरीरा।
न्यसति खलु स यावत्तत्क्षपर्य्यन्तमेनम्
निपतदथ हिमाद्रेर्मूर्द्धि शीर्णाङ्घ्रियुग्मः ॥ ४६

जगृधुं तं कोऽपि रूक्षैः क च धरणिरुहैरद्रिमूर्द्धा च मूर्द्धा
सुक्लिन्नैः पीतपूतिक्षतजपरिवृढैः स्रक्किणीलेलिहानः।
प्राणैः स्वैर्प्राणभाजां घनघनमुदितैर्प्राणमुद्दर्जयन्द्राक्।

दुद्रावान्वालिकश्चो गिरिरिव गतिमान्दीर्घपादः पलादः ॥४७

तं दृष्ट्वा भीमरूपं चणमिव सभयो भूपजो नातिदीनः
सम्प्राहैवं प्रसिद्धामृतकरतिलकस्यात्मजस्यन्नवन्धुः।
शौर्याद्भिर्नावशीर्यत्स्मृतिवलमहिमा नासि यक्षो निहन्तुं
तिष्ठेत्युच्चैः स तिष्ठत्यपि नृपतिसुतं प्राह रक्षोऽतिरूक्षम॥४८

इत्युक्ता धावमानन्त्रिशितभुजमपि भ्रान्तचेताः चताङ्गि-
र्वोत्पाट्योच्चैर्भुजाभ्यां तदचलशिखरं प्राहिणोद् राजपुत्रः।
चूर्णीकृत्य द्रुतं तन्निजचरणतलाघाततो व्यादितास्ये
व्यग्रः सोतीवमेनं खगपतिमहिवक्त्यसेत्युग्रवेगः॥ ४९

वीरायरी व्यग्रचेता द्रुतमथ विततीकृत्य दीर्घौ कफोनी।
जानुभ्यां भूमिपृष्ठे कृतनिविड़भरस्तेजसा निर्भरेण॥ ५०

पाणिभ्यां पादपाभां द्रुतमथ रसनान्तस्य संग्टह्य गाढ़म्।
गोवंधाद्धोरमूर्त्तेर्घुरघुरितगिरो दारयन्नास्य वक्त्रम्॥ ५१

अथ विवुधशरीरश्चारुमाल्याम्बरोसौ
नृपतितनयमूचे पूरुषः शापमुक्तः।
नृपतनय! तवाहं पूर्वजात्यां सखा सं-
श्टणु हितमहितानां त्रासनं त्राणहेतोः॥ ५२

भुवनभवनदीपं द्वीपमेतत्तमोर्थ्य-
स्तुहिनदनुजवंशध्वंसि कंसारिचक्रम्।
गगनतरणदिव्याभूषणं भूतिहेतुं
भज दिनमणिमेनं पादरोगीपशान्त्यै॥ ५३

तमिति समुपदिश्य श्रेयसेऽभीष्टलोकं
गतवति खलु तस्मिन् पूरुषे राजपुत्रः।

उदयनमुदयाद्रेर्मूर्ध्नि चूडायमानं
मणिमिव क्षतशोचस्त्वं प्र तुष्टाव वाग्भिः ॥ ५४
रजनिपतिशचीन्द्रब्रह्मकामार्य्युपेन्द्राः
कति कति न च तेजोधीश्वराः सन्ति लोके।
उदयति न च कोऽपि स्थापने धर्म्मसेतो-
स्त्वमिव निरवशेषध्वान्तविध्वंसदचः ॥ ५५
सुरमुनिनुतिगीतैः शश्वदुत्थाय काले
तदनुभुवनमेतत्सूर! संस्थाप्य धर्म्मे।
अनुचर इव चन्द्राद्येषु कार्य्यं समर्प्य
चितिपतिरिव चान्तर्धानतां यासि काले ॥ ५६
सततमननुकूलश्रीरयं शीतभानु-
र्मुहुरखिलकलाभिः चीणतां प्राप्य काले।
तव शरणमवाप्तो वर्त्तते देव! तस्मात्-
त्वदपरशरणं को यातु लोकः कृतागाः ॥ ५७
अपि तुहिनमयूखैर्व्याहतं तद्वियोगा-
दरुणकरसमूहैः संस्पृशन् पङ्कजातम्।
विकसयसि विदित्वा वत्सलत्वन्तवेत्थं
सुहृदि भजति च त्वां मित्रमित्येव लोकः ॥ ५८
अतिगदशिशुमारे मृत्युनक्रप्रचारे
भवभयसुगभीरे मोहतोयप्रपारे।
जगदभयदमायासागरे दूरपारे
तरणिमिति जनास्त्वान्तर्त्तुकामाः श्रयन्ति ॥ ५९
भवजलरुहमध्ये मोहरात्रिप्रवृत्त्या
चिरतरमवरुद्धो भृङ्गवद्घूर्णितोऽस्मि।

निखिलजलजमुद्राभङ्गकारिन्विमुक्तौ
दिनकर ! तव काले पादयोगं स्मरामि ॥ ६०
जय जय हरिदश्व तरणे चित्रभानो
मिहिरतिमिरशत्रो सूर शुभ्रांशुमालिन् ।
खचरगणप पूषन् हंस मे हिन्धि रोगां-
श्चरणमनुगतोऽहं द्वादशात्मन्नमस्ते ॥ ६१ ॥
जय जय खमणेऽहर्नाथ सप्ताश्व भास्वन्
तपनकमलबन्धो लोकसाक्षिन्विवस्वन् ।
सवितर रुणकालाधीश मार्तण्डचण्डाम्
हर हर मम रोगान्द्वादशात्मन्नमस्ते ॥ ६२ ॥
जय जय जगदात्मन्नादिजादित्यसृष्टे-
र्गतिद भुवनदृष्टे वृष्टिसंपुष्टिहेतो ।
उदयकरदयाब्धे भास्कराहस्करार्क-
क्षयमुपनय पापं द्वादशात्मन्नमस्ते ॥ ६३ ॥
अयि मति जडताकृत्पित्तचिन्ताज्वरार्त्तिं
श्वसानलहृदिजशूलैः पीडितोऽहं कृपाब्धे ।
शरणमनुगतोऽहं नीरुजं मां विधेहि
त्वमगदकरणार्थं सेव्यसे सर्वलोकैः ॥ ६४ ॥
वत वत बधिरत्वं त्वत्कथायां ममोच्चैः
प्रबलतिमिरजालं त्वत्पदैकाग्रदृष्टौ ।
दिनकर तव नाम्नः संजपे मूकतैत-
द्धर हर हरिदश्व श्रेयसे संप्रसीद ॥ ६५
रमाप्रिय रजोगुणप्रभवरुद्ररूपप्रभो
रवेरवलयारुणाम्बुजरुचातिरम्याकृते ।

विरोचन विकर्तन व्यसनवर्गविध्वंसकृद्-
विभाकर विभावसो विगतमोहमन्तं कुरु ॥ ६६ ॥
सहस्रदलपङ्कजोपरिविराजमानश्रिये
सहस्रनयनादिभिर्नुतगुणाय नित्योदते।
सहस्रवदनेक्षणश्रवणशीर्षपद्बाहवे
सहस्रतनवे नमो भगवते सहस्रांशवे ॥ ६७ ॥
ततो रविप्रसादतो रुजं विहाय सत्वरं
ययौ स यत्र सोदरक्षणादिवक्षणान्वितः।
पुनर्मुनेरनुज्ञया मधुव्रतः सहानुजो
जगाम कामपूजितं जपाय पीठमुत्तमम् ॥ ६८ ॥
अथोर्वशीतिसंज्ञके ह्रदे नरेन्द्र मिश्रिते
विमुक्ततः कलाधिके निमज्यतां विमोचहे।
निमज्य भस्मभूधरे प्रसाद्य भूधरालयं
प्रभुं प्रभोरनुज्ञया प्रजल्पपाण्डुनायकम् ॥ ६९ ॥
स्पृशंस्तमेव पाणिना प्रणम्य तस्य चाज्ञया
बृहद्गणेशमागतोऽर्चयत्सदाज्ञया ततः।
गिरिं घनीलसंज्ञिकं पदाभिरुह्य भक्तितो
विलोकयन्मनोभवं गुहां पुनर्भवापहाम् ॥ ७० ॥
यदीयेक्षणात्स्पर्शतः पूजनाद्वा
पयः पानतः प्रोणमात्पुञ्जितानि।
विनश्यन्ति पञ्चापि पापानि पूर्वं
प्रपद्याथ मायाकृताः पञ्चमूर्त्तेः ॥ ७१ ॥
यमाहुः परं धामदं धाम देव्याः
परं कामदं कामदेवार्चितायाः।

परं ज्ञानदं ज्ञानतत्त्वोत्सुकानाम्
परं सिद्धिदं सिद्धिपीठं प्रसिद्धम् ॥ ७२ ॥
हरिब्रह्मभूतेश्वरैः शैलभूतै-
र्धृतं तं समालोक्य संस्तूय भक्त्या ।
दधच्छौचमन्तर्बहिर्न् भावशुद्धिं
ततो पूजयच्छम्भुशुद्धान्तदेवीम् ॥ ७३ ॥
रसस्पर्शगन्धांश्च नो रूपशब्दौ
प्रगृह्णन्न वा चिन्तयन् किञ्चिदन्यत् ।
समाधाय चित्तं परं शैवतत्त्वं
स्वमन्त्रार्थचिन्ताभिरानन्दपूर्णः ॥ ७४ ॥
परब्रह्मरूपां परब्रह्मशक्तिं
परं ज्ञानगम्यां परं ज्ञानरूपाम् ।
जगन्मूलतो ब्रह्मधामान्तमेक-
त्त्विषा भासयन्ती त्रिधात्यर्कचन्द्राम् ॥ ७५ ॥
सदा स्वप्रकाशां महाकाशतुल्या-
मतुल्यां गुणैः सर्वशक्तीश्वरीं ताम् ।
त्रिपादैः परं धाम पादेन विश्वं
पदाभ्यां भजन्मानसं व्याप्य संस्थाम् ॥ ७६
अशेषक्रियाज्ञानयोगैर्निषेव्या-
मशेषेण मन्त्रेण तन्त्रेण सेव्याम्
अशेषैर्मतैश्चिन्तितां तामचिन्त्या-
मशेषाध्वगम्यैकराजालयाभाम् ॥ ७७ ॥
अशेषापदां वारणकारणपात्रीं
तथाशेषभावैरशेषेष्टदात्रीम् ।

स्फुरद्ध्यानयोगेन निस्पन्दचेता
जजापाजपां सानुजो राजपुत्र: ॥ ७८ ॥
( अतीते ततो वत्सरे वत्सला सा
महायोगिनी स्वप्नयोगेन रात्रौ ॥ )
चलच्चन्द्ररेखांशुचञ्चत्किरीटा
चलच्चारुकपोल्लसद्भासिभाला ।
चलत्तारचणेसाचताशेषभीति-
चलद्भ्रूलताभ्रामितेशानचित्ता ॥ ७९
चलत्कुण्डलामण्डितां मन्दगण्डा
चलन्नासिकाभूषणद्योतितोष्ठी ।
स्फुरत्स्मेरताभि: स्मरं वर्द्धयन्ती
स्मरारेर्गिरा निर्जितानङ्गतन्त्री ॥ ८०
द्विसूत्रस्फुरन्मौक्तिकामुक्तकण्ठी
क्वणत्कङ्कणा फुल्लसद्बाहुवल्ली ।
विचित्रोर्मिका चित्रसर्वाङ्गुलीभि-
र्वराभीविसूत्रस्रगुद्भासिहस्ता ॥ ८१
स्फुरत्तारहारोरुवक्षोजयुग्मा
त्रिवल्या स्फुरन्मुष्टिमेयाणुमध्या ।
क्वणत्काञ्चनीकाञ्चिकाञ्चन्नितम्बा
चलद्रक्तचीनोद्भवा चित्रचेला ॥ ८२
रणद्रत्नमञ्जीरपादाङ्गुलीयस्फुरद्रक्तराजीवरम्याङ्घ्रियुग्मा ।
चलत्सूक्ष्मरक्तांशुकाच्छादिताङ्गी लसत्पारिजातस्रजाभूषितांसा॥८३
अशेषाङ्गलावण्यलीलाविलासा समुद्यन्नवीनार्ककोटिप्रभासा ।
कृपार्द्राभिरीक्षाभिराप्लावयन्ती तयोर्दर्शने साभवच्छैलपुत्री ॥ ८४

तदीयासमुत्फुल्लविज्ञानवल्लीप्रसूनोपमैरुज्ज्वलैः काव्यबन्धैः।
प्रनम्रः प्रतुष्टाव सन्तुष्टचेता गिरीन्द्रात्मजां सानुजो राजपुत्रः॥८५
नमस्ते शिवे सच्चिदानन्दरूपे नमस्ते जगत्कारणानन्दरूपे।
नमोऽनेकधा विस्तृतानन्दरूपे सदानन्ददामन्दरूपे प्रसीद॥ ८६
नमस्ते जगत्कारणाचिन्त्यशक्ते नमस्ते जगद्धारणाचिन्त्यशक्ते।
नमस्ते जगत्तारणाचिन्त्यशक्ते भजच्चित्तचिन्ताशेषेऽचिन्त्यशक्ते॥८७
नमस्ते शिवे सर्वरूपैकरूपे नमस्ते शिवे सर्वशक्तैकशक्ते।
नमस्ते शिवे सर्वदृष्टैकदृष्टे कृपापूर्णदृष्टे नमस्ते प्रसीद॥ ८८

न जानन्ति देवा न पश्यन्ति सिद्धा
मुनीनां प्रसिद्धा अपि त्वां यतन्तः।
न सम्यक् श्रुतीनां गणश्चापि वक्तु-
मतस्त्वां नमस्ते शिवे यासि सासि॥ ८९
यतोऽस्याः प्रसूतिर्जगत्याः स्थितिर्वा
लयो यत्नयत्नेशता सापि पूर्णा।
जगत्साक्षिता यत्र या केवलैका
त्वमम्बासि सा पूर्णसंविन्नमस्ते॥ ९०
अधिष्ठानकाष्ठामधिष्ठातृकाष्ठां
परैश्वर्यसार्वज्ञकाष्ठां समासाम्।
समालम्बये यत्र सा कापि संवि-
त्त्वमेवासि काष्ठां वसनावसाना॥ ९१
त्वमेवास्य विद्या महामोहहेतु-
स्त्वमेवासि विद्या भवाम्भोधिसेतुः।
त्वमाम्नातयोनीयकी विश्वकेतु-
स्त्वदन्या गतिः का भवाम्भे विभेतुः॥ ९२

ऋतं ब्रह्म सत्यं परं ध्यानधाम-
प्रसादप्रकाशः परप्राण ईशः।
त्वमेवासि गौः श्रीस्वरूपा कान्तिर्मेधे
दया दान्तिशान्ती क्षमा तुष्टिरिच्छा ॥ ९३

अहिंसा धृतिः सन्नतिः सन्निवृत्ति-
र्मतिर्गीयतां शारदा तत्त्वरूपा।
त्वमेवासि मातर्गतिः सन्तितीर्षो-
र्भवाम्भोनिधेर्योगिनः सं प्रसीद ॥ ९४

श्रुतिश्चोपपत्तिः सदाध्यानधारा
परा निर्वृतिर्निर्णयात्मोपलब्धेः।
सुविश्रान्तिरश्रान्तिलभ्या त्वमेका
त्वदन्या क्रियाश्रान्तिरेव प्रसीद ॥ ९५

पिताम्बा गुरुर्ज्ञानदा गुह्यमन्त्रं
गुहावासिनी ज्ञानिनी ज्ञानरूपा।
सदाभीष्टदाभीष्टदेव्यद्वितीया
त्वदन्या गतिः कापरास्ति द्वितीया ॥ ९६

त्वमावृत्य मातः कयाप्यात्मशक्त्या
मुहुर्भ्रामयिष्ये तदात्मप्रपञ्चम्।
त्वदन्यं कमन्ये शरण्यं शरण्ये
व्रजामो विमुक्त्यै धराधीशकन्ये ॥ ९७

भवन्माययापीश्वरा ईश्वराद्या
भजन्ते दशां प्राकृतीं योगवेद्याः।
वयं के वराका जगत्येकधन्ये
त्वदन्यं विमुक्त्यै शरण्यं न मन्ये ॥ ९८

त्वमिच्छाक्रियाज्ञानरूपात्मशक्ते
प्रसन्ना नचेत् सुप्रसञ्जीवजाते।
कथं ज्ञानभक्तिः क्रियायोगसिद्धिः
प्रसिद्धिः कथं वा शिवस्याद्वयस्य॥ ९९
कथं पुण्यबीजोत्थमत्यङ्कुरः स्यात्
सुविश्वासवृद्धिः प्रसादप्रसूनम्।
कथं वा फलं मोक्षसंज्ञं विना ते
स्तनस्वरूपयःप्रीणनं चिद्घनायाः॥ ११००
अवर्णासि पञ्चाशदर्णस्वरूपा
स्फुरत्पञ्चपञ्चात्मिकास्य प्रपञ्चा।
अपञ्चत्वहेतोः सतां पञ्चमूर्त्ति-
स्त्वमेकासि पञ्चाननान्तः पुरेशि॥ १
अराला कचे देवशक्ती कराला
मरालाक्रमे विक्रमे संविशाला।
प्रवालाधरा चारुचन्द्रार्द्धमाला
शिवा शैलबालासिमः पालनाय॥ २
न मन्त्रं न तन्त्रं न यन्त्रं न पूजां
न चाचारमन्त्रर्विचारं न जाने।
पदं ते यशोक्षणाय स्वतन्त्रं
भजन्नावतन्त्रं सदा मन्त्रयामि। ३॥
मनोयज्ञवाग्यज्ञकर्म्मादियज्ञाः
न मे ब्रह्मयज्ञो न वा शान्तियज्ञः।
न यज्ञो न भक्तेर्मयज्ञो न किञ्चे-
श्वरीं सर्व्वयज्ञस्य च त्वां श्रितोस्मि॥ ४

न मे ज्ञानयोगो न मे ध्यानयोगो
न वा भक्तियोगो न वा कर्म्मयोगः।
तथाप्यस्ति दीने जनेऽस्मिन् भवत्या
जगत्यां प्रसिद्धं कृपायोग एकः॥ ५

न राज्यं न चैन्द्रं न च ब्रह्मतां वा
न वा वैष्णवं धाम नैशं समीहे।
भवद्दासदास्यं सदाऽस्त्यन्दतेन्त-
स्तदेवास्तु मातो विधेर्हास्यमस्तु॥ ६

इदं नेति नेति प्रतर्कावशिष्टं
स्वदृश्याविमृष्टं परं पूर्णमन्तः।
तदात्मानमात्मानमेवाद्वितीयं
न सन्निश्चिनोमि क्षमस्वापराधान्॥ ७

न सर्वेन्द्रियप्राणकर्म्माणि सर्व्वाण्य-
खर्व्वाणि गर्व्वाणि सर्व्वात्मरोधे।
स्वरूपे भवज्ज्योतिषि ज्ञानदीप्ते
न सम्यग् जुहोमि क्षमस्वापराधान्॥ ८

परब्रह्मरन्ध्रोपरि ब्रह्मनाड्या
परब्रह्मशक्तिं समुत्थाप्य योगात्।
परब्रह्मणैक्यं गतां चिन्तयस्त्वां
परब्रह्मभूतोऽस्मि नाम्ब क्षमस्व॥ ९

भ्रुवोरन्तराले भवाम्भोधिपारे
विमुक्तेऽविमुक्तेश्च श्रिया चापि मुक्ताम्।
जगत्साक्षिणीं भामयीं भर्गभामो-
ऽनसम्भावये त्वां क्षमस्वापराधान्॥ १०

हृदम्भोरुहे कर्णिकायां स्थितिजोगुणानालयो त्वर्णदेवोपरिष्टात्।
त्वधीशांशातीतांश्चितापोपशान्त्यै त्रिकालं न सेवे क्षमस्वापराधान्॥
प्रतीशान्तचेताः शुचिः शुद्धभूमौ निबद्धासनश्चासने मीलिताक्षः।
दधत्काष्ठमौनं वहं ध्यानयोगं न ते जापकोऽहं क्षमस्वापराधान्॥
विशुद्धो विशुद्धां वरः शुद्धदेशे विशुद्धैः समस्तोपचारैर्विशुद्धाम्।
शिवस्यातिशुद्धस्य शुद्धान्तदेवीं न सम्पूजये त्वां क्षमस्वापराधान्॥
अपि स्वेन्द्रियाग्नौ गतद्वेषरागः स्वधर्माविरुद्धं बहुच्छाप्रलब्धम्।
न शब्दादिरूपं हविः सम्प्रजुह्वन्परां पूजये त्वां क्षमस्वापराधान्॥
समाहृत्य सर्वेन्द्रियाण्याशयेभ्यो न तत्संयमाग्नौ च तान्यत्र जुह्वन्।
न संपूजये योगतोयोगहेतोर्यतीन्द्रार्चिते त्वां क्षमस्वापराधान्॥
त्वदादिष्टवर्णाश्रमाचारपालो न संपूजये चापलत्वात् कथञ्चित्।
विहीनोपि तैस्तद्विशुद्धैर विशुद्धा न भक्तिः समालम्बिता ते क्षमस्व॥
अशेषेण दोषेण शोषेण हीनं कृपाम्भोभिरापूर्णमार्त्तार्तिहारि।
प्रसन्नं सदा सन्नमन्तः पदन्ते रणद्धंसञ्काकीर्णकासारमस्त्रम्॥१७॥
विहायेन्द्रियेस्मिन् सुखे गोष्पदाभे सदोषे सशोषेन तृष्णार्त्तिमोषे।
विचिन्वं श्चिरंत्वस्मिमुग्रैभ्र मामिभ्रमाम्बोस्मि मातः! क्षमस्वापराधान्॥
मनोवाक्शरीरैः कृतं कर्म्मकिञ्चिन्नवद्भक्तिमात्रार्थिना मुक्तितः प्राक्।
न नश्येन्न दुष्येत्तदङ्गादिहान्या तदल्पं त्वनल्पापदां त्राणमेकम्॥१८
असम्भाव्यतद्भावकाशाविमुग्धो मुहुर्मृत्युजन्मादिदोषैकवीजम्।
सुदुष्पूरमन्तर्द्दहं काममोहन् प्रकामं प्रमुग्धोस्मि मातः! क्षमस्व॥
श्रुतौ न श्रुतिःसंस्मृतौ संस्मृतिर्वा न पूजासु पूजा स्तुतौ न स्तुतिर्मे।
न दासस्य ते दास्यमासादये द्रागुदासो भवेयं विधेर्हास्यतः किम्॥
न चैश्वर्य्यमैश्वर्य्यविस्मारकं ते न चार्थं त्वदर्थक्रियान्यार्थमीहे।
न ते भक्तिभावं विना भावमन्यं भवज्ज्ञानतोऽन्यं न च ज्ञानमीहे॥

त्वयि न्यस्तकर्म्मा विकर्म्मादिहीनः स्वधर्म्मस्थितः सर्वधर्म्मातिवर्त्ती।
फलाशाविहीनः फलीभूतएकः स्थितोहं कदास्यामिति प्रार्थयामि॥
शिवोमेतिगौरीति विश्वेश्वरीति भवानीति वाणीति नारायणीति।
अपर्णेति दुर्गेति कात्यायनीति प्रपद्ये कदा त्वां प्रसीद प्रसीद॥
हरे नारायणानन्तविष्णो हृषीकेश कृष्ण प्रभो वासुदेव।
शिवेशान शम्भो हर त्र्यम्बकात्मन् महादेव रुद्रेति च त्वां प्रपद्ये॥
मनोगुप्ति दुर्गेऽम्ब दुर्गेति भक्त्याऽभये भर्गपत्नि प्रपद्ये प्रसीद।
ततः कान्तयालङ्कृताङ्कङ्कृताङ्कं शशाङ्केन मौलिस्थितेनाङ्कहीनम्॥
प्रियाकारभासाप्रियाकारभासं विलोक्य स्तुतिञ्चक्रतू राजपुत्री।
नमस्ते शिवेशान शम्भो पुरारे स्मरारे महादेव मृत्युञ्जयात्मन्॥२७
गुणाधीश गौरीश विश्वेशविश्वोद्गतिप्रश्नमामत्र मुत्तारयातः।
भवत्पाशजालावलीयाशितान्प्राक्पशून्धातृमुख्यान्विलोक्यातिबद्धः
अलं दुर्बलोहं पशुर्मोचहेतोर्भवन्तं पशूनां पतिं संश्रितोस्मि।
क्षुधार्त्तं तृषार्त्तं रुजार्त्तं शुचार्त्तं मुहुश्छेदभेदातपाद्यार्त्तमुच्चैः॥
जनं वीक्ष्यसर्व्वार्त्तिहन्भीभरार्त्तो भवन्तं शिवं शङ्करं संश्रितोस्मि।
पुनर्गर्भशय्यागतोमेध्यमध्ये वसन् संस्मरन् जन्मजालं रुजार्त्तः॥३०
चलत्सूतिवाताङ्गजामोतिभीतो भवन्तं शिवं शङ्करं संश्रितोस्मि।
रुदन्क्षुत्तृषाव्याधिबाधाभिरार्त्तोनभोक्तुं न वक्तुं न चान्यं नियोक्तुं॥
समर्थोभवामीति भूयोभयार्त्तो भवन्तं शिवं शङ्करं संश्रितोस्मि।
निरुद्धं दृशा गेहकोशान्तरे मां पुनर्भोगसम्प्रार्थनेनातिदीनम्॥३२
करिष्यत्यहो कामिनी कामदासं स्वदासाय कामघ्न नोदासितवाम्।
वपुर्द्रव्यदाराकुटुम्बादिचिन्ताभयोहैगरागादिभिः शोकमोहैः॥३३
प्रमत्तोनिशं त्वां पुनर्विस्मरिष्ये ततोजन्मभीतोभवन्तं श्रितोस्मि।
विशीर्यत्तनुः शौर्यदीप्त्यादिभावः स्खलद्वाक्चलन्मानसः प्राणशक्तः॥

भविष्यामि तेनाधुनैवाश्रितोऽहं तदा नाथ दासाय नोदासितव्यं ।
न कर्माणि कर्तुं न योगांश्च योक्तुं न च ज्ञानतत्त्वं मदास्ति कालः ॥
समीपे करालेविभात्येव कालः प्रभोकालकालावमां दासबालम् ।
त्यजिष्यन्त्यमी मां सुहृत्पुत्रदारा उदारागुणावक्ष्य चेदं पुरस्तात् ॥
कृतान्तस्य दूतैर्गृहीतोयदाऽस्यां तदा नाथ दासाय नोदासितव्यं ।
सदोंकारमूर्त्तिं प्रभान्तं प्रशान्तं भ्रुवोरन्तरे कान्तविज्ञानकान्तम् ॥
भवन्तं स्मरन्नस्मरेऽन्यं यथातद्विधातव्यमव्याहतं शङ्करान्ते ।
अशक्तं स्वकर्म्मण्ययुक्तं ह्यभक्तं वृथाकालसंयापिनं पापयुक्तम् ॥
विमुक्तं भयात्कोपरोमां करिष्यत्यनाथैकनाथं विना विश्वनाथम् ।
कुरुष्व क्रियां युंक्ष्व योगं प्रविद्धि स्वतन्त्रं नचेवं शिवोदासितव्यं ॥
त्वदायत्तमेतद्द्वयं चास्वतन्त्राः प्रभोकार्य्यसे तत्करिष्यामवश्यं ।
शरीरस्य खानीन्द्रियाणां मनोधीरमुष्यासि बुद्धेस्त्वमेकोधिदेवः ॥
हृषीकेश मायेश विश्वेश विश्वोद्भतिप्रन्नमामत्र सुत्तारयातः ।
चितौ भीःचयेभ्योदिवः पाततोभीस्तथा विघ्नभीर्योगचर्यासुतस्मात् ॥
विमुक्तोभिया दृश्यतेनात्रमार्गो ह्यविघ्नाभयासंस्मृतिस्ते किलैका ।
वसन्तोविमुक्ते विमुक्ता भवेभ्यो विमुक्तैः समुत्थाय सम्बद्धकचाः ॥४२
भवत्कीर्तिभिर्नामभिः कीर्तनीयैरटामो रटामो नटामः कदा वा ।
प्रातर्मध्ये सायमन्तर्निशायां बद्धोहं स्यां याम्यपाशैः कदा वा ॥४३
केनाचिन्तोवर्त्तयामि क्षणार्द्धं हृत्स्थं न त्वा चिन्तये मृत्युमृत्युम् ।
पाशी दण्डी वीच्यते सोन्तकोयं याम्यावीथीर्यातनाश्चापि भीमाः ॥
भूयोभीता वेपते चित्तवृत्तिर्नान्यमन्ये संसृतेस्त्राणयत्नम् ।
त्यक्ष्यन्त्येते बान्धवा मां श्मसाने देहश्चायं सेन्द्रियश्चेन्द्रियार्थैः ॥४५
त्यागादेषां नास्ति मे भीतिलेशो मात्याक्षीस्त्वं दीनकारुण्यसिन्धो ॥
द्रव्यं दाराणि बान्धवान्प्रशस्तशास्त्रभोगान् योगान्देवतामन्त्रसिद्धीः ॥

अन्विष्यन्तो हन्त खिद्यन्त एते त्वामात्मानं सर्व्वदं संविहाय ॥
धर्म्मं केपि धनं केपि निगमाद्यर्थाय केपीश्वरा-
निन्द्रादीन् समुपाश्रयन्तु विविधैः क्लेशैः सुखाशाहताः।
एकं त्वां वृषवाहनं धनपतिस्तुत्यं गुरूणां गुरुं
देवानामपि देवतामन्तरनघानन्दं श्रितास्मोवयम् ॥ ४७
एवं तौ स्तुतिवादिनौ भगवतौ प्राह प्रसन्नाशिव-
स्त्वाप्यग्रे युवयोर्भविष्यति पुनः प्रत्यक्षतोदर्शनम्।
पित्रोर्वाम्परमावयोरपहतक्लेशावमैनोश्चकै-
र्दृष्टेनाप्यथ एव मुक्तिजनकां गाणेश्वरीं सम्पदम् ॥ ४८ ॥

एवमुक्तवती-स्तयोरन्तर्हितयो-स्तौ स्वप्नाज्जागरणमवापतुः। ततः प्रातरुत्थाय कृताह्निकौ तत्कालीनानि पुष्पफलानि कालागरुणिचाहृत्य देव्याः पीठे सपर्य्यां विधाय पुनः पुनः प्रणम्य तुष्टुवतुः।

येका नादशिरस्यनादिनिधना वासे वसन्त्युच्चकै-
श्चिच्छक्त्यासविशेषणाङ्कनिलया चैतन्यमात्रात्मनः।
क्रीडत्यात्मनि-चात्मनैव ललना पुंभावमातन्वती
तामेकां भवभीलुको भगवतीं भक्त्यैकया पूजये ॥ ४९ ॥
येका पञ्चकलाभिरन्तरकला काले निवृत्त्यादिभिः
पञ्चाधीशमयप्रपञ्चजननी व्याप्याखिलं वर्त्तते।
पञ्चानामपि पञ्चतैककरणी सत्ता स्वरूपा शिवा
तां त्वां सम्भवभीलुकोभगवतीं भक्त्यैकया पूजये ॥ ५०
ब्रह्माचैकदिने हरिः पुरभिदः सोपीशितुर्लीयते
देवः सोपि सदाशिवस्य विलयं यातीत्यमेवं शिवः।
उन्मेषात् समुदेत्यहो चलदृशः संमीलने मीलितः

स्याद् यस्या भगवच्छिवाङ्कनिलयां तां त्वां वयं संश्रिताः॥५१
सर्गे याः प्रविभज्य साप्रसविनीं शक्तिं निजामिच्छया
मायाञ्च प्रकृतीं तनोति च महन्मुख्यां सृतिं प्राकृतीं।
काले स्वात्मनि संलयञ्च तनुते तां त्वां शिवामीश्वरीं
शक्तिं शक्तिमतीं भजाम्यविषयां वाक्चेतसो चिन्मयीं ॥५२
ज्ञानेच्छाकृतिमस्ति दस्तत्रपुराशक्तिः परा कुण्डली
विश्वेषामिह नामरूपजननी यस्याः सदाद्यः शिवः।
विद्या शुद्धतरा महेश्वरयुता विद्या च विश्वारणि-
स्तां शुद्धाध्वभुवं भवार्तिशमनीं भक्त्यैकया पूजये॥ ५३
यस्याः कालकले तथैव मियति विद्या च रागः पुमान्
षट् तत्त्वं प्रतिभाति भाविभुवनस्योत्पत्तये मायया।
गायन्त्येव सुरर्षयः कृतधियो मायेति यांचापरां
तां मिश्राध्वभुवं भजामि भगवच्छक्तिं भवैकारणिं॥ ५४
यस्या एव महांस्तथैव महतोऽहंकारपूर्व्वासृतिः
सम्भूतास्ति लयं समेष्यति पुनर्यस्याञ्च सर्गक्षये।
अव्यक्तां प्रकृतिं वदन्ति खलु यां व्यक्तात्मकार्येचितां
तां शक्तिं मलिनाध्वसम्भवभुवं शक्राम्ब ! ते पूजये ॥५५
तत्पञ्चद्वितयालयाञ्च समनालोको हि लोकात्परो
व्योमव्यापिशिर्वास्ति समना लोकेन लोकान्ततः।
उन्मन्या उपरिस्थितं तव पदं धूतापदं निर्भयं
कालातीतमकल्पितं जनिभयाद्भीता वयं संश्रिताः॥ ५६
दृग्दृश्ये हि परापरे पुमवद्भे शक्ती यदीये जग-
द्धेतू हेतुविवर्जितं विजयते यत् स्वप्रकाशं परम्।
शुद्धं बुद्धमबुद्धगमजं सिद्धं प्रसिद्धं मनो-

तीतं प्रीतिमयं स्वरूपमनघं भक्त्यैकया पूजये ॥ ५७
साचीव प्रतिभाति साम्यकलया विश्वेन्द्रजालभ्रमं
मायीवातनुते सृजत्यवति संहन्ति क्रियावानिव।
विश्वात्माकृतिवानिव स्फुरति यस्तं निष्कलं निर्मलं
नित्या विक्रियमक्रियं हृदि निराकारं शिवं संश्रये ॥ ५८
भोगीव स्रजि कुम्भवन्मृदि मनोराज्योपमोमानसे
स्वप्नोजाग्रति चेन्द्रजालमहिमा मायोपसंहारिणि।
लीयेद्यत्र जगद्भ्रमोभ्रममजं सत्यप्रबोधं सदा
मोहातीतमनन्तमन्तरमलं तत्ते स्वरूपं भजे ॥ ५९
यद्व्याप्नोति नभोवदेतदखिलानगाद्रित्यवद्भासय-
त्येकश्चालयतिश्च निश्चलमयः कान्तोपमोयांसिवत्।
बुद्ध्यादीनथ जीवयत्यपि तनूरन्तः स्वचिच्छायया
तत्ते पूर्णतमं स्वरूपममलं भक्त्यैकया पूजये ॥ ६०
त्वं श्रुत्यादिविभूतिभिः श्रुतिपरैर्विद्येति संसेव्यसे
सत्ता केवलचिन्मयीति विमलैस्त्वं योगिभिर्मृग्यसे।
आत्मेत्यन्तरनन्तचित्सुखमिति त्वं ज्ञानिभिर्ज्ञायसे
त्वं भक्तैः परदेवतेति परमा भक्त्यैकया प्राप्यसे ॥ ६१
तज्ज्ञानान्नपुनस्त्विह क्षति क्षतं जानन्ति भेदाद्भयं
यद्ध्यानादमृतं पिबन्त इव न ध्यायन्त्यभीष्टं परं।
यद्भक्त्या न भजन्ति कञ्चिदपरं लब्धातिवाञ्छाफलं
तां काञ्चित्परदेवतां भगवतीं भक्त्यैकया पूजये ॥ ६२
यं शैवाः परमं शिवं खलु महाविष्णुश्च यं वैष्णवाः
हंसं हंसपदाश्रयाश्च परमं ब्रह्मेति च ब्राह्मणाः।
शाक्ता यां परमाविदन्ति परमां शक्तिं स्वरूपाभिधां

तत्ते तत्त्वमुमे ! परात्परतरं भक्त्याज्ञया संश्रये ॥ ६३
नश्यन्तीषु कलासु या विजयते नित्या त्रिपञ्चासु या
कालातीतपदासदात्मनिलया सोऽहेति यां शुश्रुमः।
यां ज्ञात्वा न पुनर्विशन्ति जठरे मृत्युश्च मृत्योर्भवेत्
पूर्णा सा परदेवतासि भवन्ती भक्त्याज्ञया पूजये ॥ ६४
वागीशस्त्वमसि त्रिलोकजननि भू र्वागीश्वरीत्युच्यते
त्वन्नारायण एव लैङ्गिकभिदा नारायणीत्युच्यते।
कालस्त्वं खलु कालिकेति च तथैवेशस्त्वमीशेति च
ज्ञातश्चासि शिवः शिवेति च विभास्योमित्युमेत्यम्बिके!॥६५
कर्त्ता त्वं जगतां जगन्मयि तथा भर्त्ता प्रहर्त्तापि च
ब्रह्मोपेन्द्रगिरीन्द्रजापतिरिति त्वं दृश्यसे पुंतनुः।
विश्वक्रीडनबालिका त्रिजगतां त्वं पालिका कालिका
नृत्यन्ती करतालिका प्रणयिनी मुण्डेलसन्मालिका ॥ ६६
एतत्संसृतिसंस्थितिक्षयतिरोधानं तथानुग्रहं
तन्वन्ती कलयैव पञ्चविधया त्वं मूर्त्तिभिः पञ्चभिः।
ओमित्यर्णनुताङ्गमेति च कृपा दृष्ट्या जगत्तारिणी
नादान्ते विनदन्वृषोपरिमहादेवाङ्कगां चिन्तये ॥ ६७
मौलौ चन्द्रकला तनौ पुमबला दृष्टौ जगद्धर्मिला
मुक्तिः श्रीजगदुद्भृतावतिबला चित्ते कृपा निश्चला।
मायेयं यदपाङ्गभङ्गिसुचला लीला शरीराश्रया
भ्रान्तिः कापि भवारणि विजयसे त्वं शैलजा निर्मला॥६८
चञ्चद्रत्नकिरीटकुण्डलधरं पद्मेन्दुकान्ताननं
कम्बुग्रीवलसद्गुणीकृतमहन्मुक्तालिमालोज्ज्वलम्।
सूत्रसम्वरनिर्भयाञ्चितकरे पाणौ रणत्कङ्कणं

स्वापीनस्तनमण्डलोपरिलसन्माणिक्यमुक्तागुणम्॥ ६९
चञ्चत्काञ्चनकाञ्चिकाञ्चितबृहच्छ्रोणीभरात् सालसं
सिञ्जन्नूपुरपादपद्मयुगलं रक्ताम्बरप्रच्छदम्।
सावित्र्याद्यखिलात्मशक्तिभिरवाप्ताङ्गशिवायाङ्गना
लीलालम्बितरूपनस्तु हृदयावासं परब्रह्मणः॥ ७०
रक्ताम्भोजमुखाङ्घ्रिपाणिचरणं रक्ताङ्गरागोज्ज्वलं
राजद्रत्नसुधाघटाभयधरं पीयूषपात्रीकरं।
रक्तारक्तजनोपकारिहृदयं रक्ताम्बरप्रच्छदं
तद्भक्ताश्रयमस्तु ललनालीलाश्रयं ब्रह्मणः॥ ७१
भक्तानां भवभीतिभञ्जनकृपोद्रेकस्फुरन्मानसं
सस्मेराननसानसं त्रिनयनं बालार्ककोटित्विषम्।
पुष्पेष्वङ्कुशपाशकार्मुककरं रात्रीशरेखाधरं
तद्भक्ताश्रयमस्तु दिव्यललनारूपं परब्रह्मणः॥ ७२
चन्द्रार्धाञ्चितरत्नशेखरधरं नेत्रालिशोभाधरं
पीनश्रोणिपयोधरं स्मितसुधानिस्यन्दिबिम्बाधरम्।
जन्मावपधराधरं त्रिजगतां कारुण्यधाराधरं
ब्रह्मास्त्वम्बुजलोचना तनुधरं भक्ताश्रयं चेतसि॥ ७३
पूर्णेन्दुद्युतिभूषणं द्युतिधरं पूर्णेन्दुकान्ताननं
पूर्णेन्दुप्रतिमात्मसत्वशबलं पूर्णेन्दुकोटिद्युति।
पूर्णज्ञानवराभयाक्षगुटिकाचञ्चत्कराम्भोरुहं
पूर्णं ब्रह्मसदास्तु वाचि वचसां देवीति पूर्णेष्टदम्॥ ७४
कृष्णश्वेतविचित्रनीलकनकामारक्तवक्त्राम्बुजं
लोलाष्टादशलोचनं घननिभं सिंहेशवाज्यासनम्।
चापेष्वङ्कुशपाशनिर्भयवरस्रज्ज्ञानशूलासियुक्

चन्द्रचर्मपिनाकमत्त्हृदि परं ब्रह्मास्तु वामाङ्गधृक् ॥७५॥
तप्तस्वर्णनिभं त्रिभङ्गललितं चञ्चज्जटाजूटमत्
सविघ्नमहिषं पदाक्रमहतं छिन्नोद्भवं शूलकैः ।
सिंहस्थं शरशक्तिखड्गरथपतद्घण्टाङ्कुशं पाशकं
चापं चर्म च बिभ्रदस्तु पुरतो ब्रह्मावला विग्रहम् ॥७६॥
कृष्णाम्भोजरुचिप्रियाङ्गरुचिरे कृष्णाध्वचन्द्रार्कभे
कृष्णाम्भोजसुगन्धिनीचरणदलैः कृष्णाजसच्चेतरि ।
कृष्णाम्भोजसमूत्रनिर्भयकरे कृष्णाय सासि प्रहे
कृष्णाम्भोजजसंनुतेनुतिरियं वामाङ्गष्टगब्रह्मणि ॥७७॥
श्यामानन्दगभीरतातिरुचिरे कारुण्यपूर्णाशये
पापोन्मूलिनि तापसन्ततिहरे श्रीमुक्तिरत्नाकरे ।
मायाविस्तृतविश्ववीचिविभवैः सौन्दर्य्यधारानिधौ
गौरीति प्रियनाम्नि धाम्नि महसां भक्त्या मनो मज्जतु॥७८
द्वीपे भावमहाम्बुधेः श्रुतिवनोपान्ते नितान्तोल्लसत्
ज्ञानैश्वर्य्यविरागधर्म्मसुमहत्प्राकारवत्युन्नते ।
दैत्यारित्रिपुरारिमुख्यबलिभिः संसेव्यमानेऽभितो
दुर्गानामनि दुर्गधामनि मनो निर्भीतिमातिष्ठतु ॥७९॥
या वर्णाकृतिभिर्गुणैर्विरहिता चित्केवला निष्कला
स्फूर्जन्मोहमहानिशान्तकारिणी पूर्णाखण्डप्रभा ।
सा लीला वरवर्णिनी त्रिजगतां सौन्दर्य्यसारा गुणैः
पूर्णापूर्णकलामयी हरमनःसंमोहिनीत्युच्यसे ॥८०॥
एवं तौ स्तुतिवादिनौ भगवती प्राहान्तरिक्षस्थिता—
"तुष्टाहं युवयोर्भविष्यति पुरा प्रत्यक्षतो दर्शनम्" ।

पित्रोर्वाम्यरमावयोरपहृतक्लेशावनेनोच्चकै-
र्देहेनास्यथमुक्तये क्रमवशाद्वाणीश्वरीं सम्पदम् ॥८१॥

लब्ध्वा वरञ्चेत्थमगेन्द्रपुत्र्या पुत्रौ नरेन्द्रस्य विमुक्तबन्धौ ।
तीर्थानि सर्वाणि विचेरतुस्तावन्तःस्मरन्तौ वचनं शिवायाः॥८२

श्रीरश्रीरघुनाथदेवशिवदादेव्योस्तनूसम्भवः
शम्भोर्भक्तिमृणालहृत्तिरमलः श्रीराजहंसार्भकः ।
पौराण्या नवचन्द्रमौलिकथया श्रीरामनाथः स्वयं
चम्पूं गुम्फितवाँस्तदीयकथया षष्ठोयमापूरितः ॥ ६ ॥

——:०:——

॥ इति गुरुशिष्यालापादिवरदानान्तः षष्ठोच्छ्वासः ॥

——

## ॥ अथ तीर्थयात्रादिसप्तमोच्छ्वासः ॥

—:-:—

इन्द्रनीलमणिमौक्तिकावलीक्लृप्तहारमिव मण्डनं भुवः ।
देहयुग्ममिव चाद्भुतं दानवारिदयितार्करूपिणोः ॥ १ ॥
आदिशान्तिरसयोरिवाश्रयं काव्यकामिहृदयोत्सवप्रदम् ।
स्वर्धुनीखरमयूखकन्ययोः सङ्गमं ददृशतुर्नृपात्मजौ ॥ २ ॥
तत्र मज्जनवतोः कुमारयोराह्निकं विदधतोर्यथाविधि ।
संयमं च नियमं च बिभ्रतोः शैशिरर्तुदिवसा विनिर्ययुः ॥ ३ ॥

अथ—कदाचिदुपवनविहारलोलमनसो मधुव्रतादयश्चित्रभानव इव मूर्त्तिमन्तो, गुणा इव परस्परोपकारिणः, लोका इव परस्परदर्शनसुखाशया सहचारिणः, ब्रह्मविष्णुशिवा इव एकान्तरात्मा—सोमेश्वरसमीपोपवनेषु, दत्तनयनानन्दपुञ्जेषु, मुकुलितमाधवीलतानिकुञ्जेषु, स्रवदमन्दमन्दारस्तवकमधुमधुरेषु, विरहिजनमनोविधुरेषु विचेरुः। मधुव्रतस्तु तस्मिन्जनमनोज्ञस्थलोपसेवनाद्दैववशादकस्मात् प्रमदानुस्मरणविकारतः प्रमादवानासीत् । एतदन्तरे भगवतः सोमेश्वरस्य यात्राप्रयातानां सूक्ष्मश्वेतप्रावरणान्तर्लक्ष्यमाणावयवविभागानां प्रकटदृश्यमाननवयावकारुणचरणानां स्वभावरक्ताधरमधुरमुखानां हंसीनामिव चरन्तीनां मञ्जुमञ्जीरकाञ्चीकङ्कणझङ्कारसङ्कलितः कोपि कलरवो मधुव्रतस्य श्रुतिविवरमपूरयत् ; ततस्तत्कुतूहलदर्शनोत्कण्ठितस्य हृदयं कुलिशकठोरकामसायकसम्प्रहारेण परवशं चलितश्चासीत् । स मनाक् सस्मितमुखः कुसुमकेतुमब्रवीत्—सखे! रमणीयेऽस्मिन्

रमणीयानां समाजे कोऽपि मधुरालापः संलाप इव रति-कामयोः स्वप्रलाप इव शृङ्गारविद्यानाम् अनुलाप इव मदन-मौर्वीगुणस्य अपलाप इव वेदान्तसिद्धान्तानां विलाप इव सन्त्यक्तसंसाराणां श्रूयते ; तथापि कलकण्ठीध्वनिरिव कपोती-कूजनेषु, वंशीध्वनिरिव मधुरतालतन्त्रीतूर्य्यादिस्वनेषु कस्या अपि भाषितमाधुर्य्यं श्रवणमानन्दयति; तत्कोयं महोत्सवः? किं न पश्यावः ? कुसुमकेतुरब्रवीत्—सखे ! अनुचितमीदृशीनां दर्शनं, ईदृश्यो हि मधुरोक्तिसुवर्णशृङ्खलया संयम्य दुःसहकटाक्षशरैः प्रहरन्ति,मर्म्माणि संयमिनामपि धैर्य्यतनुतन्त्रं छिन्दन्ति प्रभवन्ति,सुखेन कटाक्षायस्खलाक्षीणां स्वयं विक्षिप्ता विक्षेपयन्ति । जनहृदयानि, मधुव्रतस्तमवादीत्—सत्यमेव तद्दासक्तानामस्माभिरिन्द्रियार्थ-तास्तीति द्रष्टव्यम्, पश्य—निस्पृहानपि विषयाः सुखयन्ति, तथा ह्यमर्थापि कोकिला ध्वनिश्रुतिशालिन एव समुल्लासयन्ति, चित्रपटीपरम्परा सनेत्रानेवानन्दयति, वसन्तसमुन्मीलितकुसु-मावलीसुरभिः सघ्राणानेव प्रमोदयति—किमनेनोपन्यासेन । कुसुमकेतुः सस्मितमवदत्— शिरीषकुसुमान्यपि त्वगिन्द्रिय-वतामाह्लादं जनयन्ति, तत्पश्यावः कुतूहलं—ततः कियद्दूरं गत्वा अवगुण्ठनफणोपकण्ठ-लग्न-शिरोमणि-शोभया नागकन्यानामिव, कातर्य्यकलित-कटाक्ष-वीक्षण-वीक्षया मृगकिशोरीणामिव—स्मेरानन-कर-चरण-लोचन-कमलेन्दीवर-कानन-शोभया, वदन-सारस-सौरभ-समाकृष्ट-मुग्ध-मधुव्रततया, सरसीनामिव कुमा-रीणां समाजं भ्रूभङ्गमनोहरं विलोचनशफरीगणसुन्दरं कपोल-चित्रितमकरिकाचयचारुतरं ललितलावण्यकल्लोलं मृदुहास-फेनिलं प्रेमरत्नाकरं रत्नाकरमिवालोकयतः । तन्मध्ये विचि-

त्रेषु चित्रतरमिव,कौतुकेषु परमकौतुकमिव,रत्नमालान्तर्गुम्फित-तरलमिव हृदयधारणयोग्यं स्त्रीरत्नं समपश्यताम्। ततस्तद्दव-लोकसञ्जनिताभिलाषजर्जरीकृतस्य मधुव्रतस्य पञ्चभिरेव शरैर्-शरणं पाषाणपरुषमपि हृदयं हृदयसम्भवो विभेदयामास। ततस्तां मधुव्रतः प्रीतिकौतुकशलाकाभ्यामिव सहसोद्घाटित-पक्ष्माभ्यां विलोचनाभ्यां पिबन्नासीत्।

चित्रं दीपप्रभा सा तु स्वप्रभाभिर्नृपात्मजम्।
स्नापयामास पीयूषैरिव राजीवलोचना॥ ४

ततः स्मरशरसञ्जनिततापोपशान्तीच्छया प्रेमरत्नलाभाय धैर्य्यतटात्तदपारलावण्यपारावारमध्ये निपत्य परमावेशभरादेव नितरान्निमज्जतुर्नयननीरजराजकुमारस्य। उवाच मनसीदं सत्यमस्याम्—

वक्षोजोपरिवर्द्धयंश्च जघनं मध्यं परं क्षीणयन्,
स्मेरं संस्मरयन् तथा ह्यलसयन् दृष्टिं गतिं मन्दयन्।
चेतश्च प्रतिनन्दयन्मनसिजो लोके प्रकाशेच्छया,
स्वातन्त्र्यं शनकैरुपेत्यधिकृतः प्राग् यौवराज्यास्पदे॥ ५
ओष्ठप्रवालरदमौक्तिकतारनीलसन्नक्षगारुडतलद्वयपद्मरागैः।
कायेन काञ्चनगुणेनचकास्त्यहेतोःसङ्गुम्फिताजयतिमोहनमालिकेयम्

आमोदेन निजाङ्गजेन सुभगं सम्मोदयन्तीं श्रम-
स्वेदोद्यन्मधुविन्दुसुन्दरसुखीमुङ्कुचवक्षोरुहाम्।
पौष्पीश्चापलतामिवानततनुं शङ्के त्रिलोकीं चणा-
देनामेणविलोचनां खलु पुरोधाय स्मरो जेष्यति॥ ७
चिपतुरशान्त्वाणानसितनयनद्वन्द्वमधर-
प्रवालाक्षस्मेरः स्रवति मधुवाणीमयमहो!।

वपुर्ज्योतिः स्निग्धैर्जडयति दृशौ काममसृतै-
रपूर्वेयं सृष्टिः कनकलतिकायां स्मृतिभुवः ॥ ८

एतदन्तरे नवयौवनमौरदसम्पातसञ्जाततमुदृष्णाङ्कुरसुन्दरश्मश्रुरेखया नयनानन्दकाननमण्डलं सुविभक्तावयवविन्यासतया गन्धर्वकुमाराकारं पराक्रममध्याभ्यां केशरिकिशोराकारं उरुभुजयुगलाभ्यां चतुष्करमिवापूर्वनरकुञ्जरम्पीनस्कन्धतया धुरं धरतया च नरर्षभं कल्पतरुप्रसवमिव सुप्राणं सुनयनानयनानन्दमिव कामावलम्बितशरीरम्भास्वन्तमिवारुणच्छदप्रावृतं ज्वलनमिव भूतिच्छन्नं चन्द्रमिव चन्द्रिकास्मयविस्मयनीयं निखिलमहिलामनश्चौर्य्यपातकाशुद्ध्यर्थमिव निजतनुब्रह्मज्ञानुमध्यप्रविष्टं निजाङ्गलावण्यकल्लोलिन्यां निपत्येव जगन्मनःसमाकर्षणसिद्धविद्याजपसमापनेन विद्योतमानन्तमेकं मदनमिव, द्वितीयम् अश्विनीकुमारमिव, तृतीयं भूक्तिमहणमिव, चतुर्थं कुमारमिव, पञ्चमं कुसुमशरशरमिव, षष्ठं जगन्मोहनकरणमिव, सप्तमं सौन्दर्य्यसमुद्रमिव, अष्टमं वसुमिव, नवममशेषचित्तग्रहमिव, दशमं दिक्पालमिव, एकादशं रुद्रमिव, द्वादशं आदित्यमिव, त्रयोदशं कुसुमचापगुणालयं मधूव्रतमिव मधुव्रतं माधवीनयनातिथिं चकार। ततः सहसा प्रभाकरस्येव तद्रुचिप्रभावेन प्रफुल्लनयनकमला तद्वदनशिशिरकिरणसम्पर्कादिव जडीकृता विलोकयन्ती चिन्तयामास—

इतो दीप इवाम्बरेण तरलेनाभ्रेण भास्वानिव
प्रोन्मीलत्किरणच्छटो मणिरिव स्वच्छाम्भसाम्भोनिधेः।
वेशेन व्रजवासिनां हरिरिव प्रच्छन्नरूपो युवा
कोऽयं वीरजटाकमण्डलुधरस्तेजोबिभर्त्तुाखनम ॥ ९

अहो रूपमहो माधुर्य्यमहो तेजः किमनुकूलतया किं प्रतिकूलतया विधातुः किं सुखाय किं दुःखोपभोगाय किं सुजीवनाय किं मृत्यवे दृष्टोयं युवा किं क्लेशाम्बुराशिमुत्तीर्णास्मि किं किं चिन्तापारावारमध्ये निमग्ना स्याम्—इति चिन्तयन्ती विद्युल्लतेव कुमारस्य मनोरथशरणिं दर्शयित्वा घनसखीसमावृता देवतायतनं विवेश। तस्यां तिरोहितायां कुमारोपि अधस्तमः पतनक्लेशमनुभवन्नचिन्तयत्—

मुग्धाङ्गि ! मुग्धनयना ञ्चलपातनेन
कीदृक् त्वया न विहितो मयि पक्षपातः।
तत् किं विलुम्पसि तमाशु तिरोभवन्ती
संवञ्चनैकचतुरेव चिराय बाले ! ॥ १० ॥

किममृतमयि किं विषं विशालं जयति दृगञ्चलपातनेभवत्याः।
इति यदि न हि जीवयस्यनङ्गं कथमथवा विनिहंसि हन्त जीवम्॥११

अविशदकस्मात्तीक्ष्णः कटाक्षविशिखोममान्तरे तस्याः।
तदनु च सञ्चलनेन व्यक्तं छिन्नानि मर्माणि ॥ १२ ॥

—इति चिन्तयतः कुसुमकेतौ विदितोभविष्यामीति त्रपामनादृत्य तद्वर्त्मणि तदागमनप्रत्याशया प्रसारितनिश्चललोचनस्य तद्देवतायतनादुद्यदिन्दुकिरणमालिकेव विकाशमायान्ती शुशुभे माधवी पुरः सखोश्रेणी। तत इदमिदं पश्यामीति प्रत्याशोत्कलिकस्य क्षणात् क्षणदापतिमुखी सन्मुखएवासीन्माधवी सापि तदालोकनप्रत्याशया विवशा यात्राश्रमविवशतां प्रकटयन्ती वासन्तीसखीमाभाष्य सखी खिन्नास्मीतुरङ्गा कस्य चित्तरोश्छाया मासाद्य निषसाद। ततो दैवयोगादनतिदूरसमुपविष्टयो र्माधवीमधुव्रतयोः कूटाः शरा इव दृष्टयः परस्परं मर्माणि

प्रविश्य न निर्गन्तुमीशा अभवन् ततस्तयोर्निगुढमपि भावं सात्विकभावेनानुमीय सविधावासभाजौ वासन्तीकुसुमकेतू समचिन्तयताम्—

इयं धराभृत्तनया मनोजतपस्विवेशोऽयमपूर्वरूपः।
गिरीशगौर्योरिव योगमिच्छन्स्त्वमेतयोः सम्भवितासि कीदृक्॥१३

कुसुमकेतुस्तु मधुव्रतं सस्मितं बभाषे—

भो भीरुभावमापन्न इवाकस्माद्विलक्षसे ?।
स्तम्भप्रस्वेदरोमाञ्चवेपथु-व्याकुलोसि यत्॥ १४

वासन्त्यपि माधवीमाह—

सखि ! किं हृतचित्तेव दृश्यसे स्तब्धलोचना ?।
तथापि शोभसेऽतीव चित्रितेव मनस्विनी॥ १५

उभौ निवर्तनाविव न किञ्चिदूचतुः। वासन्ती स्वगतमचिन्तयत्—अस्मिंस्तापसकुमारे सर्वथा लग्नहृदयैव सखी, तस्य कुलशीलादिकमपि वेत्तुमुचितम्।

अनेन गुढाकृतिना व्यक्तो भावः प्रकाश्यते।
दिवा दिवाकरेणाभ्रच्छन्नेनेवोग्रतेजसा॥ १६

इति विचिन्त्य कुसुमाहरणकपटेन कुमारयोर्निकटमागत्याह—मम वयस्येयं बाला अस्मिंस्तरुणे पुन्नागे कुसुमेषु तरलं मनो वहति,अत्र तु महाभागावुपविष्टौ। कुसुमकेतुः सस्मितमब्रवीत्—भद्रे! भवत्या अभिप्रायस्तु पालनीय एव तदित उत्थाय गम्यते सुमनोहारिणी भवतु वयस्या ते। सा तमूचे—महाभाग!नात्मानमेतं च समुत्थानेन क्लेशयतु भवान्। तदैव सुमनः सञ्चयो यदि संशयमिममपहरति महानुभावः। सोऽवदत्—सुखेन ब्रूहीति। सा पुनरवादीत्—महाभाग ! तापसवेशीयं वयस्यस्ते तनुलावण्येन केनापि तेजसा देवगन्धर्वकुमाराणामन्यतम इव लक्ष्यते—

भावैः सात्त्विकसंज्ञकैः स्मर इव स्वाङ्कस्थितः कामिनो
स्तम्बज्ज्या हृतमानसो जन इव स्वेदप्लुतैर्लोचनैः।
अर्थी गूढ इव प्रसादविलसच्छ्रद्धाक्षरैस्तेजसा
केनापि प्रति भाति राजतनयो नाम्ना पुनस्तापसः॥ १७

तदयं किन्नामा? कस्य वा तनयः? किमर्थं च पित्रुत्तिमापन्नः? इति।

कुसुमकेतुरवादीत्—

सत्यमसावपि कुमारः पितुरस्य सद्भावनपरायणस्य सकलरञ्जनकारिणो राजत्वं न चित्रं, तस्य सुगृहीतनामधेयस्य चन्द्रशेखरस्य देवा इव नरदेवाः प्रभाववशीकृतास्तदाज्ञां मौलिमालां कुर्वन्ति, तेनास्य राजाधिराजसम्भवता सम्भाव्यते—इत्यादिसव्यङ्गमालापति कुसुमकेतौ अन्तःपुराधिकारिभिः कृतत्वराः कुमार्य्यौ गृहाभिमुख्यौ बभूवुः। माधवी पिपासितेव लब्धामृतपानान्निराकृता चिरजागरतः प्रसन्नेद्रसुखेव सपदि समुत्थापिता कमपि विषादमावहन्ती गमनाय प्रयत्नमपि प्रकाशयन्ती शङ्कुलग्नमिव पदं नाग्रे कर्तुं शशाक। तस्यायच्चक्षुश्चञ्चरीकोऽपि कुमारमुखसरोजमधुपानमत्त इव भ्रामं भ्रामं तत्रैव निपपात। मनोमीनोऽपि तत्कटाक्षबडिशसमाकृष्टोऽभूत्। ततः कथं कथमपि सखीभिरभ्युन्नलेवाकृष्य नीतायां माधव्यां कुमारोऽपि हृतचक्षुर्मानसोनान्यदालोकयितुं मान्यच्चिन्तयितुं वा अभवत्।

पाययित्वा प्रेमविषं तौ गूढं भावि मृत्यवे।
चक्रतुः खलवन्मैत्रीं परावृत्तमनःस्वजम्॥ १८

ततस्तयोस्तापसवेशेन राजपुत्र्या सह परिणयो न लोकोत्तर इति एतत् कथनमपि जनहासजनकं तस्मात् कस्मिन्नपि व्याख्यातुमुचितम्। वेदनान्तरात्मानं दहति स दहत्येव, दगधे

स्वाधारे स्वयमेवोपशमं गमिष्यति—इत्यादिभावनातुरयोर्भाव-
गोपनपरयोरचिरादभिलाषबीजोद्भवश्चिन्ताङ्कुरः सदा स्मरण-
गुणकथनद्विदलप्रकटितोविकटोद्वेगशाखावान् प्रलापसुकुलो-
पाण्डुच्छविकुसुमशाली भविष्यद्विपाकफलपूर्वरङ्गदर्शनीयः प्रवृद्धो-
ऽभूद्विरहमहाधिमहीरुहः। तदवधि निखिलचेष्टासु जडाविव जातौ
दृहत्स्वपराङ्गानि मा पुनः प्रियाधिष्ठितं हृदयमिति अविरलगल-
दस्रुधारया तदेव सिषिचतुः।

मधुव्रतस्तु पुनर्दर्शनं भविता वेति तदुद्यानवासमरोचयत्।
माधवीसख्योपि माधवीमन्यादृशीमालोक्य रहसि पप्रच्छुः—
सखि! सोमनाथयात्रादिनावधि भवतीमन्यादृशीमालोकयामः,

तत् कुतोपि योगं मनसाधिगतासि यन्नालपसि ध्यानावल-
म्बिनी तिष्ठसि? कोपि महत्तरभावो वा ते हृदयमारूढो
यद्दीर्घं निःश्वससि? पुरुषोत्तमे सञ्जातभावेवासि यत् पुनः
पुलकपटलालङ्कृता दृश्यसे? तथा शरीररुजा पाण्डुत्वमासादि-
तासि, विषमशरविद्धा हरिणीव विचेष्टसे, केनापि हृतहृदयेव
लक्ष्यासि,तत्सर्वथा निष्कैतवमावेदय, वयस्यासु प्रतीकारं चिन्त-
यामः=तत् किन्नाम रहस्सं जं हि वयस्से कहिज्जइनो? स्रा
णोह किं वयस्सो जत्थ रहस्सं कहिज्जइनो।

सापि विना वयस्यां नैतादृश-प्रयोजन-घटनेति विचिन्त्य
मुहुर्निःश्वस्य नतमुखमाह—

निजदुःखादप्यसहः प्रियजनदुःखे मनागपि व्याधिः।
धैर्यं भजन्ति सन्तः स्वीये दुःखे क्षणं न सुहृदाम्॥ १९

अपिच—लग्नं महाधिशल्यं ममैव हृदि जीवितुं नयतु।
हन्त! श्रवणपथेन प्रविशतु भावो हृदि स्निग्धे॥ २०

—इति मौनमालम्बे। ततः पुनस्ताभिः सशपथमनुनीयमाना शिथिललज्जा सगद्गदमाह—सखि! सोमेश्वरयात्रादिवस एव—

किं जागरणे स्वप्ने किं खलु दुःखाय किं प्रमोदाय।
किममरतनयः किं वा मनुजयुवा मे दृशोर्लग्नः॥२१

स च मां दिवानिशं जीवयति किं सुधाभिः।
किं विषमविशिखैर्निहन्ति मर्माणि॥२२

अन्धयति किमनुरागैः किं निजरुचिभिः प्रकाशयति।
सुहृदिव सदा वीर्य्योत्साहं विवर्द्धयति स्फुटम्॥२३

रिपुरिव हठादन्तर्वित्तं प्रविश्य हरत्यसौ।
अहह! सुधया सिञ्चन्त्यन्तर्निकृन्तति सायकैर्नयनपदवीम्॥२४

लग्नो यातो हृदि स्मृतिमोहनः—इत्यालपन्ती मूर्च्छितासीत्॥
सख्यः परस्परमालोक्याहुः—

भावावेशो वयस्याया अपूर्वोयं न संशयः।
तिरोदधाति यत्साक्षाद्वाङ्मनोभ्यां निरूपणम्॥२५

तदिह क उपायो भवतु? यद्विवाऽगणय्य देवीं देवञ्च गान्धर्व्वविवाहार्थं दुःसाहसमवलम्बामहे! तदपि न जानीमः—अस्या हृदयहरो राजकुलप्रसूतो द्विजो वा! तद्वास्तु कथं वा परित्यक्तसर्व्वविषयसङ्गः स्त्रीसङ्गमङ्गीकरिष्यतीति? दुर्भाव्यमेतदिति दीना बभूवुः। ततस्ताः समाश्वासयन्ती वासन्ती प्राह—सख्यो मोहनीयं नाम सर्वविषयेभ्यो दर्पदुरासदकन्दर्पदैवतः कामिनीविषयः, इयन्तु कामिनीस्वपि जगद्विलक्षणकामस्य परमसहायलक्षणा वामेक्षणा सखी वो दृश्यताम्—

कृष्णेनायतकुन्तलेन वपुषा गोरोचनारोचिषा

नीलेनोत्पलपत्त्रसुन्दरदृशा स्मेरेण शुभ्रत्विषा।
रक्तेनाधरपाणिपादरुचिना लावण्यविर्थ्यासतः
सर्वोत्कर्षधिया स्मरेण कृतिना सञ्चित्रितैषा भुवि ॥२६

दृशा दग्धं कामं जगति जनयन्ती तनुदृशा
जगद्वैलक्षण्यं सदृशि निवहन्ती गुणगणैः।
अगाधैनां मायामिव हृदि विचित्रां सुररिपो-
र्न कोपि स्यात्पात्रं यदि भवति साक्षात् स्मरहरः ॥२७

तथाहि—त्यक्तकुटुम्बसङ्गेन सौभरिणा सलिलवासि-नारममाणमीनमिथुनावलोकनजनितकामकौतुकेन मान्धातुः कन्यकाः संप्रार्थ्य किन्न गृहीताः? आजन्मब्रह्मचर्य्योपि पुण्डरीको महाश्वेतानुरागेण जन्मद्वयमङ्गीकृत्यापि तामग्रहीत्? किं वान्यत् त्यक्ताखिलविषयसङ्गेन निर्जितानङ्गेनापि भगवता भर्गेण योगीश्वरेण हिमगिरिकुमारीं परिगृह्य किन्नार्द्धशरी-रतान्नीता? तदत्र यतामह एव मयापि तस्मिन्दिने तन्माहात्म्यात् संश्लिष्टं व्याहरतोऽवधारितः। सत्यं राजपुत्र एव किमपि कार-णात्प्रच्छन्नश्चरति।

अत्रान्तरे सोमेश्वरपूजकद्विजपत्नी ईशानपत्त्रानिर्म्माल्यमा-निनाय। वासन्त्यपि सप्रणामं तदादाय माधव्याः शिरसि सन्निधाय तदावरणपत्त्रगतां कामपि वर्णावलीमवलोकयामास, वाचयामास च—

स्तनस्तवकनामिता पुलककोरकैर्णाङ्किता
यतः प्रभृति माधवीमधुरमूर्त्तिरालोकिता।
ततः प्रभृति तृष्णया परमधैर्य्यशोभायुतो
मधुव्रतयुवा चिरं भजति नैव कान्ताङ्गदशाम् ॥२८

ततो द्विजपत्नीमपृच्छत्—कस्येदं लिखितम् ?

सा सशङ्कमाह—भद्रे! भगवद्देवालयनिकटे कुटोटजा यात्रिकास्त्रयः कुमाराः सन्ति, तेषामन्यतमेन लिखितं भविष्यतीति ॥

वासन्ती सस्मितं माधवीमदर्शयत्। तां पत्रिकां सा विलोक्य सावहेलमाह—सखि ! किमेतेन वसन्तवर्णनाकौतुकपरस्य कस्यापि पद्यबन्धोर्भविष्यति।

सापि सस्मितमवादीत्—सखि ! कस्येति किं तस्यैवेति परिहस्य अन्याभिश्च सह मन्त्रयित्वा सोमेश्वरयात्राकपटेन देवीं प्रसाद्य तद्देवोद्यानं माधवीमानिन्युः। तत्रापि विहितविश्वधार्चनास्तरुण्यस्तरुतलमवलम्ब्य चिरं निषेदुः। ततो दैवात्तत्र मधुव्रतमपरमुद्यानतरुमिव, निश्चलं विगलदश्रुशिशिरोदकबिन्दुभिरिव सिक्तावनीतलं पाण्डुरच्छविकुसुमसुन्दरम् अभिभूतमिव कुसुमकेतुना मन्त्रवाणीभिरीषत्प्राप्तबोधं विरहशरणिसञ्चारादिव दीर्घमुष्णं निःश्वसन्त मालोक्य सर्वाः प्रणष्टप्राप्त इव हर्षमवापुः।

वासन्ती माधवीं सस्मितमूचे—स एवायं तापसतरुणः सहृदये परिचितस्ते न वा ?

माधव्युवाच—यथा भवतीनां तथा ममापि।

वासन्त्युवाच—सखि ! ईदृशेषु बहुदेशभ्रमणपरेषु नूनमुपाया बहवस्तिष्ठन्ति,सिद्धयश्च; त्वमपि तावदत्—तनुव्याधिविक्लवासि, तत्किमिह न निवेदयामि ते शरीरस्येदृशम् ?

माधवी—लज्जानतमुखी न किञ्चिदाह।

वासन्त्यपि स्वयमेव शनैर्गत्वा मधुव्रतं सविनयमाह—

यतः। ये विदन्ति सुहृदन्तरं धिया प्रेम वा दधति हृद्यकैतवम्।

तस्य ते हि न गिरः प्रतीचक्षते आचरन्ति हितमात्मनैव हि ॥ ]

इयमस्मत्सखी माधवी कुमारी नृदेवस्य नाम्ना वृन्दावनदेवस्य, पुरा सोमनाथयात्रादिनावधि तत्र भवतांशुमता जनितप्रकाम-दुरूहव्याधिना कान्त्या पीतरक्तेयं पाण्डुरशरीरा; इत्थंयोगिन्यपि सर्वविषयविरक्तासु तनुरनुदिनं तनुतामेव गच्छति। भवान् प्रपन्नार्त्तिहारी पुरुषोत्तमः, प्रमदोत्तमेयं राजपुत्री; तद्यदि ज्ञातं वर्त्तते तत्कर्तुमर्हसि समयोचितमस्याः प्रकारमिति।

इयं वरस्त्री प्रवरोसि पुंसां विज्ञानभाजां विदितोसि चास्याः।
कुरुस्व शान्तिं खलु पण्डिता स्वं परोपकारैः परिहर्षयन्ति ॥

कुसुमकेतुरब्रवीत्—सत्यमेव यदाह भवतीति, किन्त्वतत्त्व-विदो नोपचरितुमर्हन्ति तत्कथ्यतां कोस्याः व्याधिः ? कानि वा चेष्टितानि ?

वासन्ती बभाषे—क्षपयति कृशदेहं नैव लावण्यमल्पं
विह्वलयति वाचो न प्रियव्याहृतानि।
जनयति तनुतापं चिभ्रदत्यन्तजाड्यं
तरुणतरलदृष्टेः कोऽपि गूढो हि रोगः ॥ २८

कुसुमकेतुर्जनान्तिकमाह—वयस्य! श्रुतमस्यारुजस्तत्त्वं तदलं विलम्बेनेत्युक्त्वा वासन्तीं प्रत्याह—भद्रे! प्रापय सखीं ते करिष्यत्येष सुसुखामिति।

मधुव्रतोप्यवदत्—ज्ञाता ते सखी यादृशी ममापि हृदयसम्भव-वेदना-सम्पादिनी, तदेनां समाश्वासय तपोव्ययेनापि स्वास्थ्य मस्याश्चिन्तयामि।

वासन्ती माधवीमुपेत्याह—सखि! त्वत्कृते महापुरुषोसौ प्रार्थितः अङ्गीचकार त्वां प्रकृतिस्थां करिष्यामीति।

माधवी सा बहित्यमवदत्—सखि! चमस्व,न कोपि मे व्याधिः।

वासन्ती सस्मितं प्राह—सत्यमौषधभूतोयं तपस्वियुवा, यद्दृष्टैव त्वामपगतरोगां चकार; तथापि कश्चिद्व्यविशिष्टः स्थास्यति, तत् पाणिं प्रयच्छ मणिबन्धाकर्षणमन्तरेण चिकित्सकास्तादृक् कथं प्रति करिष्यन्ति।

माधवी साभ्यसूयमुचे? सखि! सत्यमुन्मत्तासि? किमनुचितालापैः प्रपञ्चयसि? रोचते चेद्ग्राहय स्व-पाणिम्।

साब्रवीत्—सत्यं भवतु ते लपितं, ग्राहयामि पाणिमुत्तिष्ठ, नोचेद् गृहायोत्तिष्ठ।

माधवी तामब्रवीत्—

अयुक्तभावासि किमालि! तावदयुक्तरूपो मयि विप्रलम्भः?
इतो गमिष्याम्यहमीदृशस्य चिरोपहासस्य किमद्य भोग्या।
इत्येव मुक्ता कुपितेव बाला चलचलायां गतभङ्गिमुग्धा
तामुत्थितां वीक्ष्य समुत्थितैः स्वैःप्राणैरिवासीन्नृपनन्दनोपि ॥३०

अचिन्तयच्च—

हन्त! प्रयाति कथमम्बुजलोचनेयं
चेतोधनं समुपगृह्य दृगञ्चलेन।
कं वा व्रजामि शरणं स हि पुष्पधन्वा
साम्राजमानपि तदीक्षणशस्त्रएकः ॥३१

वासन्ती—माधवीं धृत्वा समुपवेशयत्।

मधुव्रतोपि—तयैव सह समुत्थितान् प्राणान् यथास्थानं निवेश्य वासन्तीमुचे—भद्रे! सखी ते चीणा नैना मायासयितु मर्हसि तद्यथेष्टं विश्रामसुखमनुभूय स्वयमेव गृहमलङ्करिष्यति।

सा सस्मितमाह—नेयं युष्मदभिप्रायविमुखी भविष्यति। ततस्तयोरन्योन्यं प्रति भावविभ्रममालक्ष्य सख्योऽचिन्तयन्। अनयोर्मनोमृगस्तु सुभृशं भाववागुरावद्धः प्रक्षतोपि निर्भरं कामकिरातेन, तदत्र को वा जीवनोपायः? किमत्र युक्तम्? गुरुजनानुमत्या निर्वाहस्तु दूरतरः, गान्धर्व्वेण विवाहेन कुल-कुमारीणां शकुन्तलाप्रभृतीनां परिणयोपि श्रुत स्तथैव विधा-स्यामः।—इति विचिन्त्य,वासन्ती मधुव्रतमब्रवीत्—प्रतीकाराय भवितव्यं यदधुना साम्प्रतं भवति सर्वासां नः प्रार्थनैतादृशी।

मधुव्रतस्तामाह—एतासामविनयोपि प्रणयएव सहृदयानां यदप्युक्तं साम्प्रतमाचरणीयमिति तदप्यधिगतम्, वय मधुना तपस्विवृत्तयः, वयस्यापि ते तपस्विनी तपोऽर्भागिनी भूयः स्वास्थ्यमुपैतु—

ता ऊचुः—भगवन्! वयमस्याः क्षते गत्वा सोमनाथं प्रार्थ-यामस्तदस्माभिर्यावदागम्यते तावदियं नः सखी भवता विदित-धर्मकामेन प्रतिपालनीयेति गन्तुमुद्यता बभूवुः।

एवं परस्परमालापसितशर्करोदकेषु स्वाद्यमानेषु अवरो-धाधिकारिण्योत्यन्ते चारविरसा वाचो विमिश्रयामासुः—भर्तृ-दारिके! शिविकामारुहस्व इति। देशाय प्रस्थितो देवः, श्रूय-तामयं भेरीरवश्च। सर्व्वा जडतया वीतांशवइव तस्थुः।

वासन्ती मनस्यविचिन्तयत्—वैदेशिकयोरनयो रेवं भाव-मापादयता पश्चाद्विस्मेषमस्मादनकुतुकिना पामरेण दैवेनोपा-लभ्याः स्मः। सत्यमियं न जीविष्यति, कोमललतिकेव विच्छेद-दावदहनज्वालाभिस्तथाभूतायां तस्यां वयन्तु तत् पल्लवादय इव विशीर्णा भविष्यामः। अयमपि परवशो युवा यदि जीवति

दुस्तरदयिताविरहसन्तापेन, तथापि न जाने भ्रममानः काम-चाण्डालपराधीनतामनुभवन् कां कां दशामनु भविष्यति?—भगवन् सोमेश्वर! भगवति पर्व्वतेन्द्रनन्दिनि! जनकजननीवत् परमनयोः श्रेयश्चिन्तयेति ध्यानपराभूत्।

माधवीमधुव्रतौ सुदुष्पारदुःखपारावारपतनादिव निमज्जन्तौ विरहज्वालाकवलितेनान्तरणेव दन्दह्यमानौ प्रेमपाशपतितौ कातरदृशा परस्परावलोकनस्थिरौ हरिणमिथुनाविव किमपि सुखं दुःखं वा समनुभवन्तौ तस्थतुः।

अनन्तरतः पुराधिकारिणो रत्नप्रतिमामिव निश्चलां रत्नसुवर्णशिविका मलङ्कुर्व्वन्तो माधवीमारोपयामासुः। सर्व्वोपि स्वं स्वं याममवरुह्य माधवीमनु स्वदेशाभिमुख्यो बभूवुः।

व्याधपञ्जरगतेव पक्षिणी पेटिकान्तरिव रुद्धभोगिनी।
कातराथ शिविकान्तरा भजन्निश्वसन्त्यवनिनाथनन्दिनी॥३२
यावदेति नयनादतीततां वाहिनीपदसमुत्थधूलिभिः।
तावदेव विरहानिलाहतः सम्पात तरुवन्मधुव्रतः॥३३

चिरात्प्रत्यागतचेतनो विललाप—आः हतविधे! प्रियतमामप हरसि न मम प्राणानतिदारुणोसीति उत्थाय कतिपयपदं यावित्कशकटाङ्कितशरणिमनुसरणात्कमपि तरुपत्रोपरि लेखमालोक्य वाचयामास, यथा—

"त्वामाश्रित्य महीरुहोत्तम! मया नीतोध्वतापःश्रमम्।
प्रत्याशापि धृता त्वदीयमुकुलैः पुष्पप्रसादैः क्रमात्॥३४
धिग् दैवं फलकालहेतुविधिना व्याधेन दूरीकृता
किन्त्वन्यान् परिपूरयन्नभिमतैः पान्थान्न मां विस्मरेः॥३५

तत्पत्रं हृदये निधाय विगलद्बाष्पाम्बुपूर्णेक्षणः
साक्षात् प्राणमिव प्रियाकरतलं सम्मीलिताक्षश्चिरात् ॥ ३६
उन्मील्याथ दृशौ कृशोदरि गता त्वं कुत्र केनाध्वना
कं पृच्छामि वत ! क्व यामि तरले ! तन्मोपदिष्टं कथम् ॥ ३७

हा हन्त! साध्विशरणेशरणागतोहमाख्याहिसाक्वनुगतातवरथ्ययैव ।
माख्यासि किं बहुजनाश्रयजातगर्वा त्वामश्रुभिः सपदि दुर्गतमानयामि ॥
प्रेमाम्बुनाचतुरयामयि सत्फलाय सिक्तो मनोरथतरुः परिवर्द्धितश्च ।
को वेद! दैवविहितो वत! वज्रपातस्तत्खण्डनाय भविता फलकाल एव ॥
मन्दस्मितोत्थदशनांशुसुधांशुवक्त्रां श्रोणीभरालसगतिं मृगशावनेत्राम् ।
तन्वंशुकस्फुरिततुङ्गकुचातिभारसम्भज्यमानतनुमध्यतनुं स्मरामि ॥

स्मितं मृदु सुधासितं नयनकोणदोलायितम्
भ्रुवोस्तनुतरङ्गितं स्तनमनञ्चलच्छादितम् ।
गतं क्लमभरान्वितं हृदयमध्यमाकम्पितम्
स्मरामि हरिणीदृशः स्मरपिपासितं चेष्टितम् ॥ ४१
साकूतस्मितमुक्तिरल्पकुटिला स्निग्धालसं वीक्षितम्
शङ्कालोकविलोकनात् किमपि वाग्व्याजाद्यदाश्वासनम् ।
एतान्येव जयन्ति मर्म्मभिदुरास्यस्त्राणि मच्चेतसि
तस्याबालमृगीदृशः किमपरैः कामस्य पञ्चेषुभिः ॥ ४२
मद्वक्त्रं प्रति सस्पृहा सचकिता प्रस्थानभेरीरवे
प्रस्थातुं त्वरयन्तमेवमरुणा कुत्सावती सम्प्रति ।
धातारं प्रति विस्मयस्मयवती सास्नामदस्त्रं प्रति
क्रीडाभ्यत्यपि जित्वरी मृगदृशो दृष्टिश्च शान्ता क्वचित् ॥ ४३
आसीत् प्रेमभरस्थिरा क्षणमथो बाष्पाम्बुपूर्णा क्षणम्
दिक्षु व्याकुलिता क्षणं क्षणमहो ! किञ्चिन्निगूढा मयि ।

प्रस्थातुं परितोमुहुस्त्वरयति प्रेष्याजने व्याकुला
दृष्टिर्वाष्पचमूचयस्खलद्गयः शून्यावलम्बाभवत् ॥ ४४
अपि च। चिन्तामन्थरलोचनान्तनिपतद्वाष्पाम्बुमुक्ताफलैः
शोभामर्चयतीव तत्र विवरं संप्रार्थयन्तो मुहुः।
किञ्चप्राप्य तदा मनस्विधुमुखी गूढे मदीये हृदि
व्यालीना हरिणीव शौनिकशरत्रस्ता गुहासद्मनि ॥ ४५
सुखे स्मारशरेण भाविविरहज्वालावलीतापिते
तत् प्रेमाम्बुचयेन मार्जिततमे तन्मन्मथुङ्क्षेपि च।
गाढं तापयितुं स्मरेण कृतिना मां पापिनं तापिता
सा हेमप्रतिमेव निर्जनमनोगेहे मम स्थापिता ॥ ४६
मज्जन्तीव विषादवारिणि विशन्तीव चितिं लज्जया
गच्छन्तीव लयं निजात्मनि मनाग्वक्रीभवन् कान्धरम्।
तिर्य्यङ् मां यदपश्यदम्बुजमुखी दृष्टाश्रुसंरुडया
तन्मे मर्म्मणि शल्यमेतदपरः को वा कथं ज्ञास्यति ॥ ४७
दग्धेयं न क्षीणा भवति न मनाक् स्नेहविरतिः
तमो घोरं विस्तारयति न च निर्वाति पवनैः।
त्वया यत् प्रस्थाने सपदि रचिता लोचनजलै-
रपूर्व्वेयं कापि ज्वलति मनो दीपकलिका ॥ ४८
कटाक्षेण कलापाङ्गा वाणैः सर्व्वैर्मनोभुवः।
हतोहं किं विधे! व्याध! विच्छेदेन निकृन्तसि ॥ ४९
मनो मदीयं मदनस्य वाणाः सुवर्णकारादिव हेम हन्त!।
दहन्ति कृन्तन्ति विकारयन्ति हरन्ति रागैरपि रञ्जयन्ति॥५०
सत्यं वरोरुजनितोविरहोद्भवस्ते सन्ताप एष वडवानलएव घोरः।
यत्त्वद्गुणस्मरणपूर्णसुधासमुद्रमध्यस्थितोपि न हि विदन्ति मन्दभाग्यम॥

वशिष्ठितो गाढतरं मनोभूनिशातवाणाग्रयुजा गरेण।
विचिन्तयन्नेवमतीव दीनो निशामनैषीदतिजागरेण ॥५१
नीत्येव हीनं विषयं नृपस्य गृहं विहीनं धनसम्पदेव।
विनावनीनाथसुतामसुष्य शरीरमुद्वेगकरं तदासीत् ॥५२
ततः समुत्तीर्थ्य सुरस्रवन्ती बभ्राम विन्ध्यादिषु सानुमत्सु।
वने वने तां वनजायताक्षी मनुस्मरन् व्याकुलचित्तवृत्तिः ॥ ५३
—एवमस्य चरतोवमाइनान्या जगाम स निदाघभूपतिः।
यत्र तीव्रकरपीडितोजनो नयान्नयति घोरवासरान् ॥ ५४
दस्युभिर्हृतहिरण्यपान्यवस्तत्र तादृशदशामुपागतः।
शीतलं कमपि कन्दरोदरं प्रापसो ऽनुजसुहृत्सहायवान् ॥५५
एकदार्द्रदिवसे मधुव्रतोभानुदीपितमवेक्ष्य भूतलम्।
तद्गुहासदनएव निर्जने मन्मथेन विललाप पीडितः ॥ ५६
पश्य—तीव्ररविरश्मिपीडनादाश्रयन्ति पशवोपि कन्दरान्।
ईदृशेपि समये समन्ततो भ्राम्यसि स्मर! तावदसि दुर्मरः ॥ ५७
वियोगदहनेन दुःसहं मन्मथ! त्यजसि मानसं न मे।
तत्र जीवसि कथं नु दाहतो दग्ध! जीवसि पुनः पुनश्च वा ॥५८
साधु साधु विदग्धे पुरान्तकध्यक्षवत्समकरोत् सभस्मसात्।
तस्य चायमवधानविघ्नवीयन्मनोभवतयापि जीवसि ॥ ५९
एवमादिलपतोनिशामुखे चन्द्रमाः किरणचन्दनद्रवैः।
संसिषेव जगतीं जयार्थिनो मन्मथक्षितिपतेरिवाग्रगः ॥६०
तद्विषादविषसेवनादिव प्राप्य गोः क्षणमसुष्य मूर्च्छनाम्।
स्पर्शतोऽथ रुचिरामृतत्विषः प्रोत्थिता पुनरपि प्रलापिनी ॥ ६१
पद्मिनी स्फुटति सर्वतो दिवायामिनीषु च तथा ककुद्मती।
खे परिस्फुटति तारका गणाः किन्न मे स्फुटति जीवितं हठम् ॥६२

हन्मयो तु लतिका दिशानिशं हन्त ! मे स्फुटति किं विधेः क्रमः।
मल्लिका स्फुटति मालती तथा भूषु हन्त सलिले ककुद्मती ॥ ६३
कुहूषु भास्वन्मिलनादिवोष्णो न च स्वभावं हिमरश्मिरेति
दैवे विपर्य्यासमिते समस्तं व्रजेद्विपर्य्यासमिति प्रतीमः।
सुधांशुनामा विषरश्मिधारी वियद्विहारी वद ? किं करोमि
करान्तिके स्याद्यदि मे कदाचिन्न त्वामृतोनिर्वृतिमभ्युपैति ॥ ६४
इत्यादि चिन्ताम्बुपयोभरेण किं पयोधरोसौ पुरतो विकाशितः।
वियोगदीपस्य शिखाशनाशतः समुद्भवत्कज्जलकालिकाश्रितः॥६५
दिक्षु खान्यभिभवन् घनकालश्चीवं कालिदशनो घनकालः।
वीक्ष्यते स चपलाक्षिविकारो लक्ष्यते विरहिणामपकारः ॥ ६६
कालतां चितिरुपैति कन्दलैः कालयत्यपि तरुं न कन्दलैः।
भाति कालमलिनश्च वारिणि क्रूरकालजलदेधिकारिणि ॥ ६७
मग्नवत्सकलमध्यवारिणि प्राप्तसङ्क्षयद्रवानिवारिणि।
एक एव सुहृगाश्रलीलया राजते हरिरिवेह लीलया ॥ ६८
यूथिकावनमभूदविमुक्तं षट्पदेन कुसुमैर्जितमुक्तम्।
वारिचापतिवारिदमुक्तं श्रूयते विरहतापजमुक्तम् ॥ ६९
दिङ्मुखे घनरुचा तमोवृते भास्करेऽस्तकरे तिरस्करे।
सर्वतः स्मरपुरःप्रदीपकः शोभते स्म कुसुमेन नीय कः ॥ ७०
दृश्यते न निशि चन्द्रमण्डलं तन्म खञ्च मणिचित्रकुण्डलम्।
कामएव कृतचापकुण्डलः प्रेक्ष्यते चलदखण्डमण्डलः ॥ ७१
दिङ्मुखे नवघनैः समावृते सर्वतः परिपतत्पयोधरः।
शैलएष खलु वीक्ष्यते पुरस्तुङ्गता तुलिततत्पयोधरः ॥७२
दृश्यतेऽद्य वनगोचराग्रतः कामिनी सदयिता कलापिनी।
च नृत्यति भुजङ्गभोगिनी कापि कान्तभवने शिखण्डिनी ॥७३

कामकोणतरुणो रतियुक्तः क्रीडतोह भवता विनियुक्तः।
दैवतोदयितयाद्यविमुक्तं मां निहन्तु मिह नो तव युक्तम् ॥७४
मेघ! पूरयसि चातकाननं जीवयस्यखिलदग्धकाननम्।
प्रीणयस्यमृतसम्पदा द्रुमं किं वियोगिनि चरित्रमीदृशम् ॥७५
मौक्तिकाभ-बक-राजिराजितं मन्दसीकरसमीरवीजितम्।
नृत्यतेव सरसानुलापिना नादितं तत इतः कलापिना॥ ७६
छादितं घनपटेन विस्तृतं सत्कुथामृदुतृणालिसंस्तृतम्।
भाति विश्वभवनं प्रियामृते शून्यमेवविलसन्नवामृते ॥ ७७
उल्लसन्ति सरितः पयःश्रिया निःश्वसन्ति पथसेविनां प्रियाः।
उच्छ्वसन्ति तृणजातयोवने विश्वसन्ति पथिका न जीवने ॥ ७८
केतकी कुसुमधूलिधूसरः कामकाहिविषकल्पजल्पकः।
तामसी रुचिरसौ मधुव्रतो नग्नवद्भ्रमति मोहयन् जगत् ॥७९
उद्वेजयन्त्यस्तरुणांस्तटद्रुमान् इत्थो विघातैर्मलिनावताश्च।
उद्वेगवत्यः सरितो विलोला नीचाश्रयस्त्वाभिसरन्ति पूर्णा ॥ ८०
कादम्बिनीकवलितेषु दिगन्तरेषु कादम्बरीसुरभिमत्सु कदम्बकेषु।
कदम्बगन्धभरवत्सु समीरणेषु कादम्बकेष्वपि च मानसमाश्रितेषु॥
विस्फुरंत्यः प्रभवदुःश्रवगर्जनानिर्यत्कोशस्थितेजलधराध्मनामसोढुं
हन्तानयाचपलयाचपलेक्षणायाःकिन्तुभ्रमंजयसीतिविलोकयामि॥
कामं साम मुहुः शिखण्डिनइमे! हन्त! ध्वनन्ति स्फुटम्
यूपा तोयगणाः स्फुरन्ति परितो धूमो घनाडम्बरः।
अग्निस्तडिदरूज्ज्वलत्परिचितं होता स्वयं मन्मथो
हव्यं जीवितमेव मे विजयते यागोऽङ्गनादैवतः ॥ ८१
श्यामाः श्यासु पयस्ततिर्नभसि च श्यामा पयोदद्युतिः
श्यामा बालतृणावली दिशि दिशि श्यामा तमालावली।

श्यामाम्भोद ! तवागमेन जगती श्यामेव संलक्ष्यते
मद्भाग्यापचयेन चन्द्रवदना श्यामा न सा दृश्यते ॥ ८४
काम्यानन्दयसीक्षणं हरसि चोत्तापं निजच्छायया
सिञ्चस्येव नवामृतेन जगतीमार्द्रीसि संलक्षये।
तत् केन प्रियविप्रयुक्तमनसोऽमर्मच्छिदां वेदनाम्
दातुं शिक्षितवानसि स्फुटमहो ! वज्रान्तरोऽस्यम्बुदः ॥ ८४
वाष्पं मुञ्चति भूधरास्तरुवरा धुन्वन्ति शश्वच्छिरो
निर्यान्त्यद्य न कोटरात् खगगणा रोदित्यतीवाम्बरम्।
घोणीर्दीर्घ्यति पश्य—शून्यहृदया स्नेहेन हन्तोच्चक-
रुद्वेगादपयान्ति सर्वसरितो दृष्ट्वैव मां कातरम् ॥ ८५
अपि च—निश्वासन्तः प्रविशति पुरः पर्वतानां समूहो
यौरिषाग्रे विशति जलदाऽभ्यन्तरे म्लानकान्तिः।
अन्तर्द्वीपोविशति सरितं मां वियोगव्यथाभि-
र्दृष्ट्वा दीनं जनक ! जगतां किं विधे ! दारुणोसि ॥ ८६

शृण्वन्नवाब्दगुरुगर्जनतर्जनानि
पश्यन् पयोधररुचावृतदिङ्मुखानि।
पश्यन्न तन्मुखविधुं गिरमप्यशृण्वन्
पारं प्रयामि खलु केन वियोगदुर्गात् ॥८७

अध्वावरोधोमालिन्यं परुषास्तनितादयः।
काले यत्रोपलभ्यन्ते चित्रं नस्तत्र जीवितम् ॥८८

प्रकृतिं परिदर्शयन् स्वकां क्षणमुष्णां क्षणमेव शीतलाम्।
अफलं घनशब्दमादधत् पुरतोभूच्छरदागमः शठः ॥८९

कुमारो विललाप—सुदमातनुतेद्य
निर्मला नलिनी कैरविणी दिवानिशम्।

हसति स्फुरतीह मालतीवत !
तां माधविकां विना वने ॥८०

पथिकाः प्रसरन्ति सर्व्वतः कलहंसा अपि मानसादिताः।
अथ कोपि तदीयवार्तया न च मामेति कुतः करोमि किम् ॥८१
सलिलं भुवि शोषयत्यलं शरदुस्रैर्मे ममाश्रु केवलम्।
सरिता सुरुवेगहारिणी न ममोद्वेगमिमं विलुम्पति ॥८२
मम यास्यति नैव जीवनम् विफलं गर्जसि किं घनमुहुः।
कति वा न स वज्रगर्जितान्यपि तीर्णानि मयायुसो बलात् ॥८३
न च याचकचातकावलिर्जलदानैरपि पूर्य्यते त्वया।
न च ते मुदिताः कलापिनो विषये गर्जसि किं कुराजवत् ॥८४
प्रचरन्ति चकास चामरा जयति छत्रतयामलः शशी।
न तथापि तवास्ति राजता यदि दीनान्नहि पासि माहशः ॥ ८५
कुरुषे यदि दानगन्धतः स्फुटसप्तच्छदसक्ततावशाः।
मयि जीवितदेन सक्ततां कुरुषे तां वत ! कुट्टिनीव किम् ॥ ८६

चञ्चच्चञ्चलखञ्जरीटनयना फुल्लारविन्दानना।
बन्धूकाधरपल्लवा परिसरच्चन्द्रांशुचीनांशुका ॥८७
सम्यक् सौरभशालिनी परिलसल्लीलामरालीगतिः।
तस्या एव सरूपिणी शरदीयं संदृश्यते नैव सा ॥८८

शीताम्बुना सुरसपर्णसुपक्वपूगै-
रन्नैर्नवैरुचिकरैरपरैश्च भक्षैः।
संप्रीणयन् परमतापहरो जनानां
हेमन्तएष गृहिणां स्वजनाभआसीत् ॥ ८९
हेमन्त ! हे हलिकबन्धुरसि प्रसिद्धः
किं छद्मयेन शरदानहतं विहिंसि।

ग्राम्याङ्गनाललितमुग्धवधूवियोग-
दुःखानभिज्ञ ! भवते खलु किं ब्रवीमि ॥ १२००
चिन्ताजडान्तर ! ह ह ! हायति तस्य दैवात्
प्राणेश्वरीविरहघोररुजावसस्य ।
तस्यायतः समभवच्छिशिराभिधानः
कालोतिकालरजनीसहितः करालः ॥ १
अन्तर्महाविरहवह्निशिखावलीढः
पञ्चेषुतीक्ष्णगरलाक्तशरेण विद्धः ।
तस्मिन् गिरीन्द्रशिखरेऽतिजडः स्वकाले
शीतागमं न स विवेद सवेदनोपि ॥ २

धन्यमद्य तरुणं मनोभुवः शीतशानितशरैर्जडीकृतम् ।
कामधर्मपरमाः समुत्सुकाः प्रीणयन्ति सुदृशः कुचोष्मणा ॥ ३
स्वं जनाः सुकृतिनः कुचोष्मणा तापयन्ति न वियोगतः स्त्रियः ।
अद्य पूर्वविपरीतकर्मणा दृश्यसे हि विपरीतता मयि ॥ ४

उत्फुल्लकुन्दवल्लीं कामशरक्लान्तरोमधुपः ।
न विमुञ्चति साश्लेषं जड़समयस्यैव सामर्थ्यात् ॥ ५
भेदीयसि गुरुगेहे कान्तविदष्टाधराद्य वधूः ।
अविशङ्कं तव शङ्के कुरुते शीतैर्व्व शीत्कारम् ॥ ६

उत्तुङ्गपीवरतरस्तनशैलदुर्ग-
मालम्ब्य हैमरजनीषु सुखं स्वपन्ति ।
श्रीमन्महामदनभूपतिशायकेभ्य-
स्त्रासं विहाय तरुणाः शिशिरागमेषु ॥ ७

सेवितैः किमु निदाघशीतयोश्चन्द्रचन्दनकृशानुभानुभिः ।
तिष्ठति स्म यदि नाङ्कसङ्गिनी कामिनी कमलकोरकस्तनी ॥ ८

इत्थं तदा विन्ध्यमहीधराग्रे वसन् वसन्तप्रतिमः कुमारः।
प्रसूनचित्रामटवीं विलोक्य प्रसूनबाणाभिहतो बभाषे ॥ ९

प्रसून! तीक्ष्णाङ्गुलिना त्वयाद्य मन्दारसन्दारितएव वक्षः।
वियोगिनां तद्रुधिरारुणानि पुष्पाणि दुष्प्रेक्ष्यतराणि भान्ति ॥१०

मन्ये भवत्कोरकसंपुटात्तन्मनोभुवः सानलभस्मगुप्तम्।
यत्त्वं स्फुरद्रेणुकणैः सकामं तनोषि दाहं मयि केशराद्य ॥११

पुष्पोद्गमे यत् खलु ते वियोगि-वामभ्रुवां लुटति गात्ररक्तम्।
किन्तेन रक्तीकृतपुष्पदन्तः पलाशभीमोसि पलाशनाभः॥ १२

पदेन मञ्जीरकलेन पूर्व्वं प्रफुल्लतां प्राप्य विभासि यस्याः।
तस्या वियोगेपि धृतोत्सवोसि कृतघ्नवत् स पुष्पभरैरशोकः॥ १३

मा गर्वमुद्वह ! वसन्ततरो प्रसून !
सम्पद्भिरङ्गिरिव शैलसरित् स्वकाले।
अस्मिन् सदैव परिवर्तिनि कालचक्रे
वक्रे विधातरि गमिष्यति रिक्तभावम् ॥१४

हा हन्त! दैवहतकं कुसुमक्षयेन
किं मामरे! हसत कान्तवसन्तवृक्षाः?।
युष्मान् पुरः परिहसिष्यति पुष्पलक्ष्मा
क्षीणान्निदाघपरिपुष्पितवृक्षराजिः॥ १५

नवसरसिजपात्रे गाढमापीय शश्व-
न्मधुमुदितमनस्कोमञ्जगुञ्जन्निकुञ्जे।
अनुसरति वधूं स्वां पानमत्तां पुरस्ता-
न्मधुकरतरुणोयं दर्शयन्दर्शनीयः॥ १६

अधिमधुदिनमङ्गे शृङ्गकण्डूविदग्ध-
स्तरुणतरकुरङ्गीभङ्गुराङ्गाः कुरङ्गाः।

मलयवलितदृग्भ्यामालिखन्नङ्गमास्या-
दपहरति तयार्द्रस्वादितं पल्लवाग्रम् ॥ १७

अति विनिहितशङ्के दत्तसङ्केतमग्रे
मुहुरहह ! कुहूभिः कान्तमेवाह्वयन्ति ।
निवसति हि विलीना कोकिला भावलीना
निविडतरनिकुञ्जे दत्तदृश्योदपुञ्जे ॥ १८

नव कुसुमितवल्ल्यालिङ्गितः पादपोयं
सरसि कमलिनीयं चुम्बते षट्पदेन ।
मरुदुपवनकान्तश्चालयतेष वल्ली-
मह्हमिव परमेकः कुत्र वा कः समास्ते ॥ १९

हे मल्लि ! मालति ! वराङ्गि ! लवङ्गि ! यूथि !
यूयं न किं मधुभरा नमिताः सुहृश्याः।
श्रीमाधवीमधुरतामिह कामपि प्रा-
गास्वाद्य मुह्यति वियोगिमधुव्रतोऽयम् ॥ २०

तिर्य्यग् भ्रमद्भ्रमरविभ्रमदृष्टिपाता-
मुत्फुल्लपीवरकुचस्तवकावनम्राम् ।
त्वां माधवीं प्रियतमामिव माधवीं तां
पश्यन्नयामि दिनमद्य मनोरथेन ॥ २१

भ्रमर ! भ्रमसि समन्तान्मा स्पृश हे ! माधवीं मोहात् ।
एषा हि गृहीता मधुव्रतेनेन्दुचूडतनयेन ॥२२

कुसुमस्मयललिताङ्गी लतिकाः प्रौढा भ्रमर ! भज कामम्
आलोलयति किमेतामहह ! भवान् माधवीं कलिकाम् ॥२३

सत्यमतिचपलोयं ममाज्ञां परिलङ्घ्य चरतीति हन्तुमुत्थितः।
ततः कुसुमकेतुना सम्बोध्य समुपवेशितो विललाप पुनः—

अयि! मलयजपाथः शालिशुष्यद्वपुस्तत्
सुहृदिव परि पाण्डु श्याममाश्लिष्य तस्याः।
विरहविकलवाचो वाचिकामुद्वहन् किं
लघुलघुपवमानोऽभ्येति दूतः प्रियायाः॥ २४
हृदि पथिकवधूनां दुर्बलानां विकीर्य
ज्वरयति परिमृज्यन्नङ्गकानि प्रसह्य।
स्मृतिमपि परिलुम्पन् कम्पयन्नेव मन्दः
परिसरति कृतान्तस्यैव दूतो न तस्याः॥ २५
वाराङ्गनासङ्गतगीतिकाभिः
पौरप्रसारितमनोहरचर्चरीभिः।
काश्मीरवारिपरिपूरितशृङ्गियन्त्र-
हस्तैः सुगन्धिपटवासविचित्रवस्त्रैः॥ २६
क्रीड़ापरैः प्रियजनैः सहितं पुरा त्वं
सम्मानितोसि मधुमासमहोत्सवेन।
अद्य प्रियाविरहघोरविपन्नतस्य
जीवितान्तकरणाय समुद्यतोसि॥ २७
ज्ञातोसि रे! विषमबाणवरस्य तस्य
कामस्य वामहृदयस्य सखा त्वमेकः।
मन्देन हन्त! मरुताद्य विकारितोसि
मत्तोसि च प्रचुरपुष्परसासवेन॥ २८
एवं विलापवत एव निशाप्रदोष-
राकासुधाकरमुखीवरतारहारा।
ज्योत्स्नासमुज्ज्वलपटेन समावृताङ्गी
संस्मारयन्त्यवनिनाथसुतामिवासीत्॥२९

अवादीच्च—

एषा निशा जयति चन्द्रमयूखरम्या
शीतश्च चन्दनवनीभवगन्धवाहः।
हा हन्त! हन्ति यदि मामवशं न हन्यात्
किं सर्व्वभूतजयदर्पितदर्पकोद्य ॥ ३०

ततो धातारं प्रति सकरुणमुवाच—

त्वं कृपालुरिति नाथ! गीयसे, नेति धातरधुना प्रतीयते।
येन तेऽद्य करुणाभुवः प्रभोर्नैव हन्त! करुणा ममोपरि ॥ ३१

अथवा—

स्वीयदुःखमुपमीय साधवः पालयन्ति खलु दुःखितान् जनान्।
क्लेशकर्म्मफलभोगवर्ज्जितस्त्वं पुमानसि कृपा कुतस्तव ॥ ३२
सर्व्वथा भजति शुद्धमानसः प्रार्थकोपरि कृपां महाजनः।
प्रार्थयन्तमनुरागिणीं प्रियां धर्म्मतो न हि निहन्तु मर्हसि ॥ ३३

अथवा—

प्रेयसीविरहदुःखमीदृशं यो ददाति मयि दुःखिते चिरम्।
निर्घृणः किमथ कातरोक्तिभिः पामरोद्य करुणां करिष्यति ॥ ३४

—इत्यवशो भूत्वा कथञ्चित् निद्रामगमत्। तत्र तु माधवी वैदेशिकोऽसौ कुमारः कं वा देशमलङ्करोति? क्व वा भ्रमति? अहमिव किम्मां स्मरति? पुरुषस्य परुषहृदयत्वाद्वा विस्मृतवांस्तत् किं करोमि? कुत्र वा कं प्रेषयामि? स्थितिविज्ञानमन्तरेण को वा कुत्र यास्यतीति विचिन्त्य सखीभिः सम्मन्त्र्य तद्देशानुसरणसरणिज्ञापकानि विरहविज्ञापकानि च पद्यबन्धेन बहूनि विलपितानि पाठयित्वा बहुतरशुका विसृष्टाः—कदाचिदमीषां शुकानां विहायसा दिशि दिशि सञ्चरतान्तेन प्रियतमेन प्रियतमोक्तं देशं प्राप्तो-

त्येकतमस्मान्मुखान्मद्दृदयं हृदयवेदनाञ्च एतन्नगरानुसरणपन्थानमुपलभ्य समायाति, तर्हि जीवितधारणमपि सफलं भविष्यति; अनुभवामि च मर्त्यलोकवसतिसमास्वादं; यद्यनया सत्यवेदनया तदवधि जीवितस्यावकाशः प्रदीयते नैतादृशे न मनोरथेन वञ्चिता तादृशेन प्रियतमेन विनाकृता क्षणमपि जीवितुमुत्सहे, श्रूयते च हिरण्मयवर्षपति कुमाराय पिता मां दातुमिच्छति। यदि मनसा वृतो हृदयकमलमधुव्रतो मधुव्रतो नायाति परिणयदिवसावधि, तदैव सम्पादयिष्यामि स्वहत्यां जनगर्हितामपि निरयदामपि; यतोनातः परञ्जनगर्हा नातः परं निरयदुःखमिति।

ततो दैवात्तेषामन्यतमः शुकः कोपि मधुव्रतस्य समीपशाखिशिखसमारूढोऽभूत्। मधुव्रतोऽपि विरहवेदनाभिरलब्धनिद्रः शुकसम्पातमवगत्य तत्रावधानवानभूत्, शुकोपि शिक्षितानि पद्यानि स्वभावमुखरतया पुनः पुनः पपाठ; मधुव्रतस्तत्समाकर्ण्य लब्धलक्ष्यः समचिन्तयत्सत्यमसौ प्रियासन्देशहरस्तद्विरहविलपितान्येव पठति, भवतु पुनरप्याकर्णयामि इति तूष्णीं तत्र दत्तश्रवणोऽभूत्। शुकः पुनरपि पपाठ—

"अस्मत्पितुः पुरमिदं मणिभिर्विचित्रं
तुङ्गं पुनस्तुहिनशैलमिव द्वितीयम्।
द्रक्ष्यस्यनेकदिवसानि च नन्दनाभं
रम्यं वनं तदनु कीरदृशा लभेथाः॥ ३५

दूरं ततो गतवतो भवतः पुरस्तादाविर्भविष्यति पथद्वयमत्यपूर्वम्।
एकत्र तत्र खलु पिप्पलवृक्ष एकः
सन्त्यज्य तं तदपरां शरणिं श्रयेथाः॥ ३६

तद्दक्षिणामनुसरन् सरणिं हिमाद्रे-
गौरीप्रियप्रियमथाप्स्यसि चारु शृङ्गम्।
शैलेन्द्रजास्तनतुलान्दधतः कदापि
नाम्नैषमुज्झति स यस्य मनोजशत्रुः॥ ३७
तत्राङ्गनिर्झरपयःकणिकाभिषिक्तो
भुक्त्वा फलानि मधुराणि नीपीय पाथः।
गङ्गातरङ्गकणशीतलवातसेवी
श्रान्तिं विमुच्य परमध्वभवां व्रजेथा॥ ३८
तीरं तीरं त्रिदशसरितः सञ्चरन् सन्तरेथा
मत्सन्तापं हृदि परिवहन् हेलया हैमशैलम्।
दिव्यं देव्युद्भवक्षतयशोराशिनेवातिशुभ्रम्
गङ्गाद्वारं तदनु निवसन्नेव पूतो भवेथाः॥ ३९
तत्र स्नात्वा निखिलपतितत्राणलब्धावतारे
तोये तापत्रितयहरणायैव शैत्यन्दधाने।
मायाबन्धत्रुटिपटुतरं वीक्ष्य मायाभिधानं
मायाभर्तुः पुरमतितरं पुण्यमादाय गच्छेः॥ ४०
तस्माद्भूयस्त्रिदशतटिनीतीरवर्त्माधिरूढो
गच्छेथास्त्वं विमलमचिरात्सूकरक्षेत्रमग्रे॥ ४१
तस्माद्गच्छन् कतिपयदिनैर्यत्र दृष्टः स आसीत्
प्राजापत्यस्तदपि न चिरात् क्षेत्रमासादयेथाः।
स्निग्धश्यामोमसृणविकसत् पुण्डरीकायताक्षो
लक्ष्मीकान्तः पुनरिव जगन्मोहनायावतीर्णः॥ ४२
दृग्भङ्गीभिः सपदि जनयन् क्रूरकन्दर्पमन्तः
सोऽन्वेष्टव्यः सरसिजदृशां चित्तचोरः कुमारः॥ ४३

नत्वा पूर्वं तमतिरुचिरैरञ्जलिपुष्पोपहारै-
रभ्यर्च्याथ श्रवणसविधे मद्दशां वर्णयेथाः।
मा भूः कुर्वन्नसमयविधिं कञ्चन त्वं त्वराभिः
सा विघ्नमिल्लंगति समये या कृता नीतिमद्भिः॥ ४४

मनोजदवमूर्च्छिता सुचिरलुप्त पत्रावली
मुहुः श्वसनकम्पिता निपतिता निरालम्बना।
विशीर्णकुसुमस्मिता सितपरागपाण्डुच्छवि-
र्मधुव्रतवियोगिनी लुठति मञ्जुला माधवी॥ ४५

प्रायः स्मराकंपरिशोषितधैर्यनद्या
रेखाप्यलङ्घितमयात्तव सौहृदायाम्।
केन त्वया मदुपकारकृते कुमार!
लङ्घानि दुस्तरनदीगिरिकाननानि॥ ४६

गाढं दुरन्तमदनाख्यकिरातपाश-
बन्धेन बन्धुरहिता हरिणीव दूये।
नोचेदनुग्रहपरोसि तदा न चास्मि
कीदृग् दशां प्रियकृते न जनः प्रयाति॥ ४७

मां दातुमिच्छति पितैव जयन्तनाम्ने
भूमीपुरन्दरसुताय तदप्यदूरे।
नायाति चेद्यदि भवान् प्रथमं विवाहा-
ज्जन्मान्तरेऽपि भवितास्मि तव प्रियैव॥ ४८

मधुव्रतः श्रुत्वा समचिन्तयत्—सत्यमसौ प्रियायाः सन्देश-
हरः शुकस्तत् किं नानुसरामः?

ज्ञाता तत्पुरसरणिर्ज्ञातं हृदयं प्रियाजनस्यापि।
शुकवचसा मे पुनरपि जीवितुमुत्साहितश्चेतः॥ ४९

वचनामृतेन भवता यदुपकृतं तन्न शक्यमेतस्य ।
प्रत्युपकर्त्तुं भवति मया त्वदर्थं मृतेनापि ॥ ५०

ततः समचिन्तयत्—

सुनन्दकुसुमकेतू कदाचिदनुमती न स्यातामिति तौ सुप्तौ सहसोत्सृज्यमानो दवपवनविचालिततृणोपमः शुकादिष्टसरणि-माक्रम्य तांस्तान्नगरगिरिसरिदरण्यग्रामानुल्लङ्घ्य प्रियाधरघनरस-पिपासया चातक इवापरपानीयपानेष्वपि विमुखः, सदागति-रिव सदागतिः, प्रेष्यजन इव तत्प्रियासन्दिष्टावधिदिनगणन-परायणः, मनोरथसमारूढ़ः, प्रबलोद्वेगवाजिमान्, प्रियसारथि-गुप्तोसाववशोऽपि त्वरन् ययौ। ततो नगरनिकटमागत्य विश्राम-माकाङ्क्षन् क्षणं निषसाद; अचिन्तयच्च—अध्वमहोदधेः पारं प्राप्तोऽस्मि कथमिदानीमतिदुर्घटप्रवेशमन्तःपुरं प्रवेक्ष्यामि? नृपतेः कथं वा विदितो भविष्यामि? प्रियायास्तद्वयस्यानाञ्च कथं वा प्रत्यक्षीकरोमि? पुरन्दरपुरस्यापि परमदुर्लभलावण्यललितकले-वरां योषिद्वरां कदा वा तन्मुखचन्द्रमसि चकोरतामेष्यति चक्षु-र्युगलं? कदा वा धनुर्लतयेवानतया मण्डयिष्यामि वक्षःस्थलम्? कदा वा ह्याङ्गुलिग्रहणेन सङ्गृह्य चिबुकतलं मुखमुकुरमालोक-यामि विषदम्? कदा वेष्टयामि तद्बाहुवल्ल्या प्रेमनिगलं तरुमिव स्वशरीरं? कदा वा तदधरपक्वबिम्बफले भविष्यति शुकचञ्चु-चातुरी दशनानाम्? कदा वा किमपि श्रुतिरहस्यजपेन समभिल-प्स्यामि कामप्यभिलषितसिद्धिम्? कदा च मे करिकरलालित्यमधि-गतौ तत्तनुकमलिनीसमाकर्षणलोलौ स्वीकरिष्यतः? तनुतरङ्गिणी लावण्यसलिलविहारिणस्तत्कुचकलशावलम्बमासादयिष्यति मे करतलम्=कामकार्मुकयष्टेरिव तन्मध्यं मुष्ट्या ग्रहिष्यामि?नितम्ब-

कनकशिलायां खरनखरशिखरेण विरचयिष्यामि मदनकीर्ति-लेखम्? चरणपल्लवेन मण्डयिष्यामि स्वमौलिम् ?

अङ्के क्लान्तायास्त्रपया नताया वक्त्रं समुन्नामयतः प्रियायाः ।
स्पर्शादिवेन्दोरुपलब्धजाड्यः करः समासादयिता कदाचित् ॥५१

भित्वा कञ्चुकमुत्सुकं वरतनो राक्षष्य वासो हठा-
ल्लज्जानम्रमुखीं लतामिव नतामुद्भच्छवक्षोरुहाम् ।
प्रेमस्पर्शजडां कलामिव विधोः संरभ्य दोर्भ्यां दृढम्
भूयासञ्जडतां व्रजन् स्मरशरज्वालाहतोनिर्वृतः ॥५२

—इत्यादि मनोराज्यमनुभवन् पौरजनवदनेभ्यः सुश्राव; भर्तृदारिकाया माधव्या विवाहमहोत्सवोपहारसमर्पणाय त्वर्य्यता-मिति, ततस्तद्दाग्वज्रपाताद्दताशुरिव चणमासीत् । अचिन्तयच्च—

हतास्ता निहता प्रीतिर्हता धीश्चिहतोस्म्यहम् ।
हतेन मदनेनाद्य किन्नाम न हतं मम ॥५३

धिगस्तु वामं हृदयं मदीयं धिगस्तु वामं मदनञ्च वामम् ।
धातारमेषा मयि धिग्धिगस्तु दशामिमां यैर्गमितोस्मि वामाम्।५

तत् किं करोमि? कुत्र वा गत्वात्मानं व्यापादयिष्यामि?तत्-चणात् स्मृतिमुपलभ्य—अहो ! विस्मृतवानस्मि यदुक्तं मित्रेण, प्रेयसीविलापसम्बन्धिपद्यानि पठता—'तत्पिता दातुमिच्छति जयन्ताय, परिणयदिवसावधि मम प्रतीचया जिवीतं धार-यिष्यतीति' तत् किं न त्वर्य्यत इति समुत्थाय गतिपरो बभूव। एवं त्वराक्रतोप्यतितरदीर्घनगरं लङ्घयतो रात्रिरगमत् । ततः प्रातःशिशिरशर्वरीनिर्गमसमयनिरन्तरनिपतन्नीहारनीर विन्दु-सुन्दरकुसुमदलदर्शनीयं दर्शयता हुगन्तेन नागरीनागरि-कयोर्जनितजाड्यचमत्कारं प्रमथगणभग्नदचाध्वरस्थलमिव यत

तत्र पतितव्यस्तसमस्तसामग्रीकं भग्नप्रजं गृहमिवापरिस्कृतं पुरमवलोक्य सविस्मयं कामपि पौरपुरन्ध्रीं पप्रच्छ—भद्रे! कथमद्य प्रवृत्तमहोत्सवसमयेऽप्यनुत्साहः पौराणाम्?

सा अब्रवीत्—किं पृच्छसि अतिविरसेऽस्मिन् वृत्तान्ते निम्बनिर्यास इव जिह्वा नाभिमुखी भवति; न वा तीक्ष्णसूचीप्रवेश इव श्रवणानुकूलमिदम्। उभयथाप्यनुचितमेतत् कथनं; तथापि शुश्रूषा चेत्—श्रूयताम्। मधुव्रतः सोत्कण्ठः कथ्यतामित्यवादीत्।

साब्रवीत्—हा! अद्य व्यतीतरजन्यां राजन्यचूडामणिर्हिरण्यपुरपुरन्दरस्य तनयेन पुरन्दरतनयेन जयन्तेनेव भर्तृदारिकाया माधव्या विवाहमहोत्सव आसीत्।

मधुव्रतोऽतिविषण्णो विभावयामास—किं परिणीता तर्हि-हृतैव जीवितासि कृतान्तेन? पुनरपृच्छत्—भद्रे! ततस्ततः?

सा प्राह—सायमेव स्वालङ्कारैर्भूषयित्वा स्वदासी वेदीमध्यं प्रापयित्वा सखीभिः सा निष्क्रान्ता कान्तपङ्केरुहाक्षी निष्क्रान्तमेव जीवितं तस्यैव।

मधुव्रतः [स्वगतं] फलितो मे मनोरथ स्तदन्वेषयामीति विचिन्त्य [स्पष्टं] प्राह—भद्रे! क्व गतेति ज्ञायते?

सा तमूचे—अत्यङ्गुतमतिकरुणमितोगव्यूतिद्वयोपरि कुण्डमेकं वर्त्तते, तत्र यत् किञ्चित् पतति तत् सर्व्वं शिलात्वं क्षणात् प्राप्नोति, तत्र निपत्य शिलामयी जाता। मधुव्रतस्तदतिदारुणमाकलय्य, हा! किं शृणोमि? किं स्वप्नमनुभवामि? हा हतोऽस्मि! भग्नोमनोरथः! पतितोऽस्मि विषमे शोकसागरे!!

तत्तत्कामदशाग्निशिखगहने तद्वत्पुपद्माश्रया
सामोदोद्भवया मधुव्रततयैवाकुलसम्भ्रामयन्।

तेनाहं कुटिलेन कामविधिना सम्पातितोऽस्मि स्फुटम्
हन्तात्यन्तवियोगदावदहनज्वालावलीसङ्कटे ॥५५

अविलम्बं गच्छतु जीवनं नैतत्क्लेशमनुभवितुं समर्थोऽस्मि —इति क्षणं मूर्च्छामवाप्य पुनः प्रबुद्धो विललाप—हा प्रिये ! पुनर्नावलोकयिष्ये न तर्पयिष्ये पुनर्नयनश्रवणे तव वदन-वदनसरस्वतीरसाभ्यां कथं जीवितेश्वरीं विना किं कृतम-कस्माद्दैवहतकेनेत्यादि विलप्य पुनस्तां पप्रच्छ—भद्रे ! सखीभिः किमनुष्ठितम् तस्या जनकेन जनन्या बान्धवैर्वा ?।

साचाब्रवीत्—सख्यस्तु तत्कुण्डपतनात् प्रेमसुप्रतीतं चक्रुः।
राजा राज्ञी ते च पौराः पुरन्ध्रो भृत्यामात्यावान्धवास्तद्वियोगात्।
नाप्नुत् पापिलासदं शैलकुण्डं शैलीभूता हन्त! तिष्ठन्ति गेहे॥५६

मधुव्रतोपि चिन्तयामास—प्रिये प्रेमसुप्रतीति कारिणि!

मत्कृतेऽद्य त्वया प्राणा दुस्त्यजाश्च पणीकृताः।
त्वत्कृतेऽद्य विना प्राणान् मम प्रतिपणोऽस्तु कः ॥५७

कादम्बरीरागवशेन चन्द्रापीड़ो मृतोहं ससुता-निमित्तम्।
स पुण्डरीकोहमपि त्वदर्थं महाजनो येन गतः स पन्थाः॥५८

ततः कथं कथमपि तत्कुण्डमवाप्य कमलिनीमिव हिम-रश्मिभिर्जडीकृतां दैवप्रतिमामिव सपरिवारां प्रियामवलोक्य गलदश्रुभिर्विललाप—

आशां स्वराज्यगमनाय निरस्य चिन्तात्
प्राणाधिकानुजमयास्य सपुष्पकेतुम् ।
व्रीडां विहाय भवदर्थमिहागतोऽह-
मेतादृशी त्वमसि किं मम जीवनेन ॥५९

आश्लेषयामि च शिलाप्रतिमामपि त्वा-
मासादनाय चिरसञ्चितवाञ्छितानाम् ।
अत्रापि मे जयति दुर्घटनैव धातुः
सृष्टे च वारिणि भवामि शिला पुरस्तात् ॥६०

हिंसात्मनोऽशुभकरीति च वेद्मि सत्यं
जन्मान्तरेपि दयिताजनसङ्गमश्च ।
सन्दिग्धएव विनताङ्गि! विदन्नपीत्थं
दुःखासहिष्णुरहमद्य तनुं त्यजामि ॥६१

पुनरप्यचिन्तयत्—जीवितं न त्यजामि चेत्, हतप्रत्याशो वियुक्तप्रियाजनः परित्यक्तसोदरो निःसुहृत्सहायो जीवितुं कातर इव सत्यमक्षमोस्मि । कुत्र गच्छामि? केन समश्नामि? केन वसामि? केन वा लपामि? सत्यं न कस्मै चित् मुखं दर्शयामि, न वा जीवलोकं द्रष्टुमुत्सहे; अहो ! बलवान् कुसुमेषुः वियोगशोको वा प्रियाया दैवो वा दुरत्ययः । को वा मां सर्व्वस्मादेव स्नेहानुबन्धादपाकृष्य मतिं गतिञ्च परिलुम्पन् बलादिव महामोहसागरे पातयति ? न कोपि मां चिकित्सितुं रक्षितुं वा शक्नोतीति विचिन्त्य सहसा कुण्डे निपत्य शिलीभूतः संवृत्तः ॥

अविचिन्त्य हन्त! निजघातमपि स मतिविगर्हितम् ।
कुण्डमपतदलं मृतये न हि दैवविद्रुतजनेऽस्ति धीरता॥६२

श्रील: श्रीरघुनाथदेवशिवदादेव्योस्तनूसम्भवः
शम्भोर्भक्तिमृणालवृत्तिरमलश्रीराजहंसार्भकः ।
गौराख्या नवचन्द्रमौलिकथया श्रीरामनाथः स्वयं
चम्पूं गुम्फितवांस्तदीयकथयोच्छ्वासो गतः सप्तमः ॥७

## ॥ इति तीर्थयात्रायां कुण्डपतनोनाम सप्तमोच्छ्वासः ॥

## ॥ अथ विलापाद्यष्टमोच्छ्वासः ॥

---

तत्र तु दिवाकरोदयकाल एव प्रबुद्धौ सुनन्दकुसुमकेतू, क्व गतोऽसौ कुमारः किं चिरायतीति चिन्तापरौ बभूवतुः। ततः सहसोत्थाय उद्यदादित्यकिरणकरपत्रपाट्यमानपत्रपुटकपुटीकनीपटुतरसुरभिसम्बन्धिवासितसलिलकणहारिमारुतमनोहरेषु सरस्तीरपरिसरेषु निजनिलयस्फुटनदुःखोद्गदतामिव मधुकराणां झङ्कारकारुण्यकलरवभरितेषु तेषां शोकातुराणामिव पततामुत्पततां कमलगर्भधूलिषु लुण्ठतां दर्शनदर्शनीयेषु क्रीडानिलयात् प्रव्रजतामण्डजानां विच्छेदशोकादिव स्तब्धानां तेषामण्डजानामङ्गजानामिव निरीक्षणाय नितान्तविस्फारितनेत्रोपमपत्रकोणपतच्छिशिराश्रुकणानान्तरुवल्लीश्रेणीनां पुरःपतितशीर्णप्रसवदर्शनासमुद्वेगात् पर्यस्तोद्धतचिकुराणामिव गुल्मानां एतत्समस्तगुरुतरदुःसहदुःखादिव निर्झरव्याजाद्रुदतामद्रिकुलानामालोककलितकारुण्यसमुद्देशेषु देशेषु विचारयन्तावनासाद्यविषादवशीकृतौ निषेदतुः। परस्परं सकरुणमूचतुश्च—

हा किमिदं! किं जातं! क्व यातः! क्व यावः! केन वा नीतः! केन वा लप्स्यावः! कया वा मोहयित्वा नीतः! जानीवश्च न खलु माधवीबद्धमना मनागपि अन्यासु न मतः करिष्यति, किं माधवी जनकराजधानीशरणिं कुतोऽपि ज्ञात्वा ससार? तत्किमावाभ्यां सहैव प्रस्थानाय? समुन्मत्तो वा कान्तारान्तरमविशत्? किं वातिदुःसहवियोगवेदनाऽसहिष्णुनात्मैव व्यापादितः? तदतिविषमेण विधुरेण विधिना जनकजननीजनपदवियोगं विधाय केनापि न शान्तिरासादिता यदवशिष्टयोरपि सहजयोर्वियोजनं

व्यधायि, इदमवशिष्टं जीवनं कथन्तिष्ठति? न तिष्ठति चेत्, कः कमेतानि कृच्छ्राणि प्रापयिष्यति ? आर्य्य ! सत्यमहमतिदुष्कृतिः त्वमप्यकृतसुकृतोसि, यतो जननीजनकौ परित्यक्तौ, परित्यक्ता स्वजनसमाजसहितानन्यसाधारण-भोगसुखसम्वलितापूर्व्वपुरुष-पौरुषोपार्जिता राजधानी, सम्प्रति कृतघ्नेनेव भक्तानु-रागेणाधिगतावेकान्तकान्तारगहनदुरारोहणगिरिगणसञ्चरणस-हायौ कथाविश्रामसुहृदौ फलमूलकुसुमसलिलादिसमाहरण-किङ्करौ आवामपि परित्यक्तौ । तदिह शङ्कावहे सकलसाध्य-साधनं जीवितमपि परित्यक्तम् !! आवामप्यतिसुदृढ़जीवितौ यद्वत्तं विनाप्यमुक्तजीवितौ विलपावः ।

भ्रातस्तवास्य सुकपोलसुनासमास्यं
पारीन्द्रमध्यसममध्यममन्दकान्तिम् ।
नागाधिराजकरपीवरबाहुयुग्मं
नेत्रामि केन नयने सुखितां नयामि ॥ १
यावन्न ते स्मितसुधामधुराननेन्दु-
म्पश्यन् प्रतप्तहृदयं परिसान्त्वयामि ।
तावत्कथं भवतु जीवितधारणम्मे
तद्दर्शपूर्णशशलक्ष्मचकोरवृत्तेः ॥ २

अत्र पश्यावोत्र पश्याव इति प्रत्याशयाकाननमेवं पर्य्यटन्तं तुम्बुरुनामानं चित्राङ्गदपुत्रमपश्यताम् । ततस्ते परस्परं संपरि-ष्वज्य पुनः प्राप्तजीविताविव पारावारपारगताविव परितोष-मवापुः । अथ तुम्बुरुः कुमारो मधुव्रतः क्वेति समपृच्छत् । तावपि तेन वञ्चितौ स्व इति सर्व्वमकथयतां । तुम्बुरुश्चिरं रुदित्वा अहो ! देवमहो देवमिति ब्रुवाणो रुदन्तं सुनन्द-

माबभाषे। कुमार! प्राज्ञोसि, वीरकुलप्रसूतोसि, समधीत-शास्त्रोसि, समुपासितवृद्धोसि, अस्य सर्व्वसत्वदुरत्ययस्य दैव-दुर्व्विपाकस्य धर्य्यादृते न मित्रमस्ति; तत्पर्व्वेषां राजर्षिकुमाराणां रघुनाथप्रभृतीनां व्यसनानि समनुचिन्त्य धर्य्यमवलम्बाताम।

शीलं साधु तदेव यन्मदवशात्राम्यात्दृशत्वं भजेद्
बुद्धिः सैव शुभा न मूर्खपिशुनैः सञ्चालिता या भवेत्।
मैत्री सैव हठाऽतिलाभविपदां पाते न या कम्पते
ज्ञानं विद्धि तदेव यद्विकलतां शोकेऽपि नालम्बते ॥३
तत् शौर्य्यं प्रतिगर्ज्जिते प्रतिभटे यन्नावसादम्भजेत्
स त्यागः सुहृदां हृगङ्गुग्रवशो नो यः परावर्त्तते।
तत्साधुत्व_तमाधिभिर्व्वि निहतेऽप्यन्तर्य्यदुज्जृम्भते
धैर्य्यायैव न चेदनर्थकपदं ह्येनाः सतां सम्पदः ॥ ४
लब्धानीव हि दुःखानि लब्धव्यानि च कानि चित्।
धैर्य्येण रक्षतां धीर! दुःखमोचाय मानसम् ॥ ५

सुमन्दो लब्धव्यानीति वाग्भङ्गया सभयं तुम्बुरु माबभाषे—अस्मासु निष्क्रान्तेषु माता किं चेष्टितवती? राजा किमब्रवीत्?

तुम्बुरुराबभाषे—अस्मासु निष्क्रान्तेषु नृपतिर्धारिताशेष-परिजनः शयनीयमाविवेश, ततः शयनमध्यस्थितश्चिन्तया निश्चेतन इवावतस्थे। राजा विषण्णः शयनमालम्ब्य किमपि ध्यायन् तिष्ठतीति परिजनात् विज्ञाय राज्ञी तन्मन्दिरद्वारमवाप। तत-स्तद्द्वारपालतया स्थितो वृद्धप्रश्ननामार्भकः पुनः पुनः प्रणिपत्य देवीं निवेदयामास। देवि! देवेनात्र संविशता निखिलपरिवार-निवारणविधित्सयैतदुक्तम्—वृद्धप्रश्न! यदि कदाचिद्देवी समा-याति तदा निवर्तनीयेति तत्_ क्षमस्व ममापराधमिति पुरतः

प्रणामनम्रशिरसा स्पृष्टभूतलो ऽभूत् ततो देवी सविस्मया सम-
चिन्तयत्। किमेषा नवीना रीतिरार्य्यपुत्रस्य! सदास्य विरलावल-
म्बिनी विशेषतो विषमसाम्यसहायभूताहमेवासम्। तत्र कीदृ-
शीयं विचारणा सत्यमननुभूतपूर्व्वेयं दशा समुपस्थितेति पुनः
चणं विचिन्त्य—हृष्टप्रसन्नमाहूयाब्रवीत्—हृष्टप्रसन्न! यथार्थनामासि
जानासि चेत्, कथय—कथं विषादमापन्नस्ते देवः? कस्मिन्
समये कस्मिन् प्रस्तावे कस्य वा पुरतः किमालोक्य किमाकर्ण्य
वा?। हृष्टप्रसन्नः प्रणिपत्य न्यवेदयत्—देवि! किमपि न बुध्यते
किन्तु कुमारयोरालोकनसमुत्कलिकातरलितस्तदर्थं परिजनान्
प्रेषयन् शतचणोहृष्ट एव तर्कितः, चणेन कुमारयोरालोक-
मादकस्मात् सायंसमयचन्द्रमसोरिव सहोदितयोः शान्तरूपयो-
स्सम्मुखकमलशोभान्यथैव जाता, कुमारावपि न तादृशमभि
ननन्द, चणेन चोत्थाय शयनमन्दिरद्वारि मामेवं नियुज्य शयान
इव किमपि ध्यायंस्तिष्ठतीति, तत् श्रुत्वा देवी कापोतशापं
संस्मृत्य चिन्तयोद्भ्रान्तदर्शना सपदि समुत्क्रामज्जीवितेव नासाग्र-
निहिताङ्गुलिप्रवालाङ्कुरेण नाशाग्रवर्त्तिनं जीवमिव चणं निरो-
धयन्ती भूतलप्रवेशाकाङ्क्षिणी सीतेव भूतलमवलोकयन्ती; व्रीडा-
कलङ्केन मलिनीकृतमुखचन्द्रमण्डला चणं स्थित्वा सखीभिः सह
निहत्य भवपूजामन्दिरमागत्य चित्राङ्गदामाहूय च निभृतमाह—
भगिनि! प्राणेभ्योऽपि प्रियतमासि हृदयादपि विश्वसनीयासि तेन
त्वां ब्रवीमि—नैतत् प्रकाशितव्यं न भेत्तव्यम् न वदितव्यं, स्वेन
शिरसा शपथयामि; सखि! यानि मे वित्तानि वासांसि तानि
त्वयैव विभज्य भरणीयेभ्यो दीयतां यथा यावज्जीवमन्याश्रयं

न कुर्वन्ति ; शुकसारिकादयो विमुच्यन्तां यथा सुखं विचरन्तु; त्यजन्तु पराधीनतां; प्रमदवनवर्द्धितमृगास्तु न यास्यन्ति, ते च त्वया स्वपाणिदत्ततरुणतृणस्तवकैः परिपोषणीयाः। क्षणं स्थित्वा दीर्घं निश्वस्याब्रवीत्—सखि ! कुमारौ मे कृतदारौ कदापि कुतोऽप्य-लब्धदुःखशोकौ, सम्प्रति दारुणेन दैवेन शोकसागरमध्ये पातितौ, पितुश्च शासावधीरणौ न किञ्चिदनिष्टमनुष्ठितवन्तौ; चेत्—श्रुतं मया राज्ञः सकाशात्, मृगयाविहाराय निष्क्रम्य गताविति यदा कदाचिदागमिष्यतः मत्कनिष्ठभगिनी भवती तन्मातृस्वसा मातैव स्नेहानुबन्धेन भोजनादिषु सावधानतयैव भवितव्यं पितु-र्गृहान्मया सहागतोऽमात्यः सुशीलोमहचनाद्वाच्यः—सुशील! पितृ-समोऽसि साक्षान्मातामह ते च भवता कुमारयोर्भवितव्यं; जनन्यै जनकाय ममाञ्जलिः प्रेषणीयः, सर्व्वथा मत्कृते जरद्दशायां नात्मा व्यथयितव्यः, कन्या तु जन्मदिवसएव परप्रतिपालनीयेति त्याज्या भवति, स्पष्टमेव समुत्सृष्टास्मि, भ्रातरोपि विश्वावसुप्रभृतयः प्रणाम-प्रणयादिभिर्व्वाच्याः, पित्रोराराधनपरैः सदा भवितव्यं, न पित्रो-र्वरं दैवतमस्ति। अन्यच्च मम बालकौ यत्र तत्र स्थितौ तत्राप्रमत्तै-रनुवर्त्तितव्यौ, एतावुभयतएव बालचन्द्रसूर्य्याविव सूर्य्यचन्द्रकुल-प्रसूतौ, सम्प्रति तातावधीरणाविधुरितौ अकृतदारावसम्बद्धमूलौ मातृविहीनाविति—गलदश्रुलोचना निःश्वस्य विरराम। चित्रा-क्रन्दा किमिदमिति विस्मृता विगलद्वाष्पजला विलक्षणा क्षणं स्थित्वा पादयोपरिनिपत्य—प्रसीद प्रसीदेति ब्रुवन्ति, विज्ञापया-मास—देवि! किमिदमकस्मात् केन विकारितासि? विदारितासि वा केन हृदयशल्येन ? किमुन्मत्तासि वा रसेन? किमोहसे ? किं ब्रवीषि? किं वा मयि किमपि कारणाद्दारुणदण्डप्रहरणपरासि?

यदेवं श्रावसि—तत् कुरु, मयि यदन्यत्समुचितं दण्डनं नैवं श्रावयितु मर्हसि, अथवा पूर्वमिव विश्वसनीया हन्त!! तत्कथय, किमर्थं किमिदमनुष्ठीयते ? देवी तां सनिश्वासमाह—भगिनि ! नतत् श्रवणदुःखतया श्रवणयोग्यं, रसनापि विरसतया न कथितुं प्रवर्त्तते, तदश्राव्यमकथ्यमिदमिति। सावदत्—देवि ! शरीरादप्यधिकतयाहमनुगृह्णीता, पुरा मत्तविधे कदा किमपि न गोपितम्। देवी तामुवाच—सखि ! कथ्यते, श्रूयतां— दैववशान्मम दैवहतायाः स्नाताया षष्ठेऽहनि कमलगर्भान्निःसृत-इव कमलगर्भरजोरमणीयभूतिभूषितस्तत्किञ्जल्ककान्तिपिञ्जरित-जटाकलापोमदादिरागरहितोऽपि प्रमदानुरागरहितः अतएव पितामहतां प्राप्तोऽपि कुमारचेष्टया प्राप्तविकारो मम दुर्लिखि-तान्यमूनि लेखयितुं धातेव सूतिकासदनं षष्ठेऽहनि मम वास-मन्दिरं विवेश कपोतनामा मुनिः, तेनार्य्येणापरनार्थ्यकार्य्येणा-सादितयोगबलेनापरबलाजनभाववशीकृतेन मदनवेतालगृह्णीते-नायुक्ताक्षराणि प्रलपता बहुशोऽहं प्रार्थिता, ततो मयापि पति-व्रताधर्म्मं पश्यन्त्या बहुधविनयेन सम्बोधितोऽप्यनिवृत्तचेताः शापदग्धानि कुलानि मे कर्तुं समुद्यतस्ततोभयान्मया समा-श्वास्य भवत्या वञ्चितस्त्वमेव जानासि, ततो वञ्चनां ज्ञात्वा एकान्ते पुनरपि मां निर्दहन्निवाब्रवीत्—कोपि विरूपाक्षः पुरुषस्त्वामुपैतु; ततस्तदाकारधरौ तनयौ ते भविष्यतः, तौ विलोक्य प्रियेणावमानितापदमेष्यसि। ततोऽहमतिभयकातरा मर्म्माणि शौणिकविषशरताड़िता हरिणीव त्वरमाणा भयार्त्ता भूतशरणं गुणगहनमनसा शशिशेखरच्चवणमाश्रितवती; मुहुर-ब्रुवं—नाथ ! नान्यो मां मुनिशापाद्दर्शयेदिति—ततः सपदि

निःसृते तस्मिन् निरपत्रपे निर्घृणे निर्घृणिभिः प्रकाशयन् प्रासादमध्यं मध्यंदिनद्युमणिरिव कोऽपि कापालिकवेशधारी सहचरीसखः पुरुषः पुरतो मे प्रादुरासीत्, ततस्तत्सहचरी मायेव मां विमोहयन्ती मच्छरीरं विशन्त्युपलक्षिता, पुरुषोऽपि—प्रिये! तव स्मरणादागतोऽस्मीति वदन्नेव लक्षितः; ततः क्षणं विमूढेवासं, तदनन्तरमार्य्यपुत्रोऽपि तद्गृहं विवेश, पुरुषोऽपि सहचरीसखस्तत्पश्यतएवान्तर्दधे, आर्य्यपुत्रोऽपि मामपृच्छत्—कोसाविति। मयापिविदितं सर्व्वमावेदितं=कपोतप्रार्थनावधिभगवत्स्मरणतदागमनान्तमार्य्यपुत्राय किन्तु तत्तेजसाभिभूता विस्मृता—न शापवृत्तान्तमकथयं, आर्य्यपुत्रोऽपि मद्वचनात्प्रतीतिमापन्नः। मन्ये—तदिदानीं फलितः स एव मुनिशापः—यतः कुमारयोरालोकनेनैव संशयविषाक्तमना मनागपि न स्वास्थ्यमुपैति शयनीयगतो विचेष्टते, कुमारावप्यवधीरितौ, परित्यक्तैवाहमपि, यतो वासगृहप्रवेशतो निवारिता भोस्त हे—कुलटेव तस्य पुरतो गन्तुं किञ्चित्कथयितुं वा, शापमावेद्य कथितेऽपि संशयिष्यति मायाप्रगल्भपटीयसी जातिरियं मां कल्पनाभिर्वञ्चयतीति, धिग् दैवं धिक् कुले जन्म धिगस्तु प्राणपरित्यागफलदायिनी लज्जा; हा किमिदमतिबीभत्सं, न दर्शयिष्ये मुखमार्य्यपुत्राय, न वा अपरेभ्यः, नानेन मर्म्मणि निखातशल्येन क्षणमपि जीवितुं शक्यं, न लोचने क्षणार्द्धमपि जगतीतलमवलोकयितुमीहते, प्राणा मे निर्गन्तुं त्वरयन्ति, मातर्धरित्रि! धारयस्व मां गर्भम्, तात, मृत्यो! पितृराजवसतिं नय मां, प्राणेश्वर! प्राणास्त्वय्येव समर्पिताः सकरुणाः, आत्मा त्वमेवासि न त्वया वियुक्ताभवामीति वाष्पवर्षकलशीर्गीर्व्वाणप्रतिमेव तदेकात्मना परिणता तूष्णीं बभूव।

सुनन्दः सातङ्कं व्याकुलोऽपृच्छत्—तुम्बुरो! कथय किं-जीवति मे जननी न वा सतीव सद्भावधीरणा व्यतिक्रान्त-जीवनाभूत्?।

तुम्बुरुरुवाच—कुमार! धैर्य्यमवलम्ब्यतां, जीवत्येव यस्या युवां कुशलिनौ। सुनन्दः—श्रुतात्र्सनादीवाम्बुपूरतरङ्गाघातै-र्निःश्वासगङ्गानिलैस्तटिनीतटद्रुम इव द्रुतं पपात। ततस्तस्य समासन्नशिखर इव कुसुमकेतुरवलम्बनायासीत्। ततस्तुम्बुरु-कुसुमकेतुभ्यामाश्वास्यमानो विललाप।

हा मातः! किमिदमभूत्? कुतः प्रयाता
हन्तास्मान् परिवर्द्धितान् विहाय।
ताः सख्यस्तव परिचारिकादयो वा
किम्भूताः कमिह समाश्रिता भवन्तु॥६॥
तद्गेहं सततमहोत्सवाभिरामं
किम्भूतं वत! रुदितैरभूदिदानीम्।
त्वत्पुष्टा रुचिरमृगाः पतत्रिणस्तेऽ-
प्युद्ग्रीवाः किमिति मुहुर्विलोकयन्ति॥ ७॥
अधोर्धैः पुरिपुरसुन्दरीगणाना-
माक्रन्दो वत! पतितोऽप्यघोररूपः।
आहन्ताः शिशुतरुणा रुदन्ति पौरा-
स्तन्नादैरिव रुदतीव सा पुरी ते॥८॥
श्रुत्वा ते मरणमुदस्य धैर्य्यजालं
किम्भूतो वत भविताद्य भूमीपालः।
तच्छून्यं भवनमिहेन्द्रभामिनीना-
माक्रन्दैःस्फुटमिव कां दिशं प्रयातु॥ ९॥

वत्सेति स्मितशरलाननात्पुनस्त्वां
न श्रोष्ये गिरमहहापुनर्न्न द्रष्टा।
अच्छाये रहहव हन्त ! मात्मृत्यं
धिग्दैवाद्दसतिरतीवकष्टरूपा ॥ १० ॥

—इत्यादि विलपन् मोहमवाप। तुम्बुरुस्तं प्रबोध्य पुनराह—कुमार ! श्रूयतां वृत्तान्तशेषः ; एतदन्तरे भगवान्नारदो राजानं दिदृक्षुरायातः, राजापि ससम्भ्रमं समुत्थाय स्वयमभिव्रज्य तमानीय विधिवद्गृहीतासनमकरोत्। मुनिरपि परिपूजितः परिपृष्टकुशलं तमब्रवीत्—राजन्! भवतोनयाधिवेदनया सवेदनो भगवान् भूतनाथो भवन्तं प्रति मां प्रहितवान्, त्यजैनं सन्देहदीर्घाध्वभ्रमणश्रमं शृणु तावद्यथार्थमस्यार्थस्येति, सत्यं सुताविमौ भवतैव पौराणेन शरीरेण जातौ, पुरा भगवत्या पार्वत्या शप्तौ भृङ्गिमहाकालौ प्रतीयताम्।

राजा तमाह—कथमिदम् ?

मुनिराह—पार्वतीविरहमूढेन भवता भ्रमता भ्रमात् सावित्री परिस्पृष्टासीत्, मनुष्यवद्भ्रमणशीलेन भवता परिस्पृष्टास्मि तन्मनुष्यतामाप्नुहि मनुजजातिजातायां तस्यां पार्व्वत्यां पुत्रौजनयित्वा शापान् मोक्षसीति तस्मात्तस्याः पतिव्रताया भगवत्याः शापपतनं परिपालयन्तौ भवन्तौ अजावपि लीलया मनुष्यजन्मासादितौ तत्किमिति विमोह मापद्यसे ? तथापि न संशयनिवृत्तिश्चेत्तदा दिव्यचक्षुषा प्रत्यक्षमिव ध्यानमासाद्य क्षणं यथावृत्तं सर्वं विलोक्यताम्।

ततो राजापि ध्यानमालम्ब्य सर्व्वं यथावृत्तमवगत्य तारातवीं च म्रियमाणामवगत्य चक्षुरुन्मील्य सत्वरः सव्यथो नारद-

मुवाच—भगवन्! त्वत्प्रसादात् समुत्तीर्णोऽस्मि संशयसागर-सङ्कटादिति प्रणम्य तं विसर्ज्य च तारावतीमन्दिराभिमुख-स्त्वरा गमनपरो बभूव; ततः कियत्पदमेव व्रजति तस्मिन्नकस्मा-दन्तःपुरात् प्रसरन्त्यापि दारुणो दारुणो नृपतिमनसां किमिति किमिति शङ्काजनको वहिःप्रतीहारस्थितानां सुशन्निवाकाश-मुदतिष्ठन्महाक्रन्दनध्वनिः। ततो राजा ससम्भ्रमः पतन्निव धावन्निव मुह्यन्निव तदुच्चैरुक्रोश—हा देवि! हा प्रियतमे! जीवितेश्वरि! क्षणं संस्थापय जीवितम् एष संप्राप्तोऽस्मि मा सखीर्मा तनुजौ मा परिजनान् मा मां पतिव्रते! वधीरव-ध्योऽस्मि। देवि! कृतापराधे मयि नैतादृशी शास्तिः समुचिता, तत् क्षमस्व। प्रियतमे! क्षमा हि साध्वी साध्वीनामिति विल-पन् पदे पदे परिस्खलन्नुन्मत्तवाङ्मयइवान्तः पुरं प्रविश्य भवस्य पूजागृहोदरे महार्त्तनादमध्यवर्त्तिनां करुणामिव मूर्त्तिमतीं देवताप्रतिमामिव सगद्गदवचनाभिर्नयनभृङ्गरनालैर्गलत्सलिल-धाराभिरभिषिच्यमानां देवि! देहि प्रतिवचनमिति सखीजना-भ्यर्थनामशृण्वन्तीं कोपेनेव गृहीतमौनामुरःशिरोनिघ्नन्तीनां महाकरुणारावैरप्यलभमानप्रबोधां महानिद्रापन्नां देवीमप-श्यत्। पश्यं श्चाविरलविगलदश्रुभिर्निर्गतजीवनइवाचेतनो निपपात। ततः पुनरपि लब्धप्रबोधो विललाप—देवि! किन्नाव-लोकयसि? किन्नाभिभाससे? किं नानुव्रजसि? किं न स्मितज्यो-त्स्नया मण्डयसि वदनेन्दुमण्डलं? किं मानिन्यसि? मानिन्या अपि तेन स्मरामि कदाचिदेतादृशीमविनयचर्य्यां—यन्नानुव्रजसि नोत्तिष्ठसि नासनं प्रतिपादयसि, देवि! प्रसीद,—पादयोः पतामि, हा! किं न वदति, नोत्तिष्ठति, नावलोकयति, किं नास्ति? किं

नाहमस्मि ? किमवलोकयामीति मोहमवाप्तवान्। पुनर्लब्ध-बोधस्तामङ्कमारोप्य विललाप।

त्वं जीवितं मम मनोगतमेवमासीत्
ज्ञातं पुनस्तदनृतं यदहं सजीवः।
मिथ्येति नैव गदितुं भवति स्फुटं यद्-
यातानि सर्व्वकरणानि समन्वया मे ॥११॥

यत्ते मुखं सुमुखि! ते नयने च बाहू
तावेव सा तनुरियं पदपल्लवे च।
सत्यं तथासि खलु मानिनि! वल्लभेति
नासीति किं हृदि कृशोदरि! गाढमोहः ॥ १२ ॥

देवि! प्रसीद निपतामि पदाम्बुजे ते
यद्यद् ब्रवीष्यवनताङ्गि! करोमि तत्तत्।
जीवेन सुन्दरि! शपामि तथायुषेन
सम्भाष्य याहि सहयामि न वारयामि ॥ १३ ॥

हित्वा मां व्रजसि यदीह सापराधं
तद्युक्तं भवतु परं निरागसस्त्वाम्।
किं बन्धून् सपरिजनान् सखीः किमेता
किं पुत्री सुमुखि! जहासि निर्दयासि ॥ १४ ॥

रतिकतुरगतागतश्रमतासुखविश्रान्तिरञ्जिता स्थितिः।
त्वयि याम्यामपयानमाश्रिता वद मुग्धे!ऽद्य कया वसे क्षणम्॥
हा !! गतैव न ददाति भित्वाभेदकवाटं प्रणयप्राचीरमुन्नता।
अपहृत्य च मम जीवं किमितः प्रस्थानसाहसं प्राप्ता ॥१६॥
विनिपात्य हन्त कष्टे कुलानि मामशरणं कृत्वा।
असतीव च परलोकं किमाश्रिता वामभावेन ॥१७॥

ततोऽस्तकं गर्हयन्नुवाच—

तारहारलतिकां लसद्गुणां मत्प्रियां नयसि लुब्धकवद्यदि ।
तर्हि मां शमन ! तत्र सायकं किं विमुञ्चसि नितान्तमूढवत् ॥१८॥

अन्तक ! स्मरधनुर्श्रियोमिमामस्रतेस्तुलति कामिव प्रियाम् ।
जीवितं मम तदीयमध्यतो ग्रन्थिवत्कठिनमित्युपेक्षते ॥१९॥

लावण्यवारिनिधिरन्तककुम्भयोने !
पीतस्त्वया मम पुनर्दयिताभिधानः ।
तज्जीवनैकशरणं खलु मीनमेकं
मां भोक्तुमेवमसमर्थ इवारभासि ॥२०॥

उग्रकालतपनेन भूमिभृत्सम्भवा यदि मदीव शोषिता ।
तत्रभूमिगतदीनमीनवज्जीवितं मम कथं चिरायति ॥२१॥

मधुरस्मितायुष्यसुन्दरी स्तनपीनस्तवकेन सन्नता ।
कनकव्रततीव सा प्रिया विबुधोद्यानगता विराजते ॥२२॥

तरुणातरुणेन किं मया लतिका सा ललिता मदाश्रया ।
अविवेकपदेष्यतिष्ठता भवता किन्नु विधे ! वियुज्यते ॥२३॥

या दृष्टा शमयति तामिन्दुरूपा यत्स्पर्शोमलयजलेपनातिशीतः ।
यद्वाणीश्रवसि परा सुधाशलाका तच्चिन्ता हरति कथं तु जीवितं मे ॥

इत्यादिविलपन्तं राजानं सपुरोहिताः ।
अन्तःपुरममात्यास्ते प्रविश्याश्वास्य चाब्रुवन् ॥२५॥

राजन्नलं शोकावेशेन ।

सुहृद्भिन्नविपत्यादि व्याधौ संसारसञ्ज्ञके ।
असारं सर्व्वमित्येव विचारः परमौषधम् ॥२६॥

न स्थास्यति च कालेन यदेतदवलोक्यते ।
शरीरमपि किं किञ्चिद्विप्रयोगे विमुह्यति ॥२७॥

अपि स्यान्मार्त्तिके कुम्भे भग्ने किञ्चित् प्रयोजनम्।
न देहे मानुषे किञ्चिद्विपन्ने तन्महिपते ! ॥२८॥
सर्व्वे स्वार्थपरा लोका गतिं स्वां स्वां व्रजन्त्यपि।
स्वकर्म्मणापुत्रमित्रकलत्रे ममता कुतः ॥२९॥
न शोकः कुत आगत्य कश्चिद् गृह्णाति जन्तुवत्।
प्रणष्टं भावयन्नन्तः शोकमुद्भावयेत् स्वयम् ॥३०॥

एवं मन्त्रिभिरनुनीयमानोपि रुदन्नेवासीत् पुरोहितस्तमब्रवीत्—

राजन् ! विदितवेद्योसि किन्ते प्राकृतवन्मतिः।
शवोयं न च सा कान्ता रुदितैरुदितैरलम् ॥३१॥
सतीं गृहीत्वा भगवानीशोबभ्राम मेदिनीं
शोकएव परिप्राप्तो न सा प्राप्तेति च श्रुतम् ॥३२॥
गता सा सङ्गिनीत्युच्चैर्यदि शोचसि सन्मते ! ।
गतान् कौमारमुख्यान् स्वान् किं न शोचसि सङ्गिनः ॥३३॥
उपभुक्तप्रियारूपभोगाय यदि रोदिषि।
पूर्वेंदुरुपभुक्ताय किमन्याय न रोदिषि ॥३४॥
लोकापवादभीतेन रामेण परमप्रिया।
जीवन्त्यपि परित्यक्ता किं मृतां न जहासि भोः ! ॥३५॥
शोचितुं यदि शीलन्ते शोचस्वात्मविमोचनम्।
असारं नरकागारं स्वोदेहं किनु शोचसि ॥३६॥
प्रेम चेद्यदि कर्त्तव्यं कुरुस्वात्मनि निर्म्मले।
अखण्डे सच्चिदानन्देऽमांसखण्डेऽनिरर्थकम् ॥३७॥
अमृतं निर्मलं नित्यं विहायात्मानमीश्वरम्।
कस्मा! मेध्यमयीं येषां मृतां ध्यायसि किञ्चिरम् ॥३८॥

राजन्! न शोकसमयो नवास्या रुदितं हितम्।
बन्धुर्भविस बान्धव्याः कुरु बन्धुक्रियामतः॥१९॥

ततोऽवदतएव तस्मादपाकृष्य तारावतीशवं यानमारोपयामास। ततो हा देवि! हा देवि! हा भगिनि! हा राजपुत्रि! हा मातः! क्वासि कुत्र नीयसे? कथमस्मान् परिहरसि? वयं सख्यो वयं मातरो वयं भगिन्यो वयन्त्वदाश्रयाः कमाश्रयामः कथं त्वां विना जीवामः कमवलोकयामः क्व यामः कुत्र तिष्ठामः किं जातं किमापतितं केनापध्यातास्मः कस्य वा किं कृतं किमद्भुतं को वा सुहृदावियोजितः इत्यादि। पुरन्ध्रीणां पुनरपि महानाक्रन्दः समुत्थितः। राजा कथं यानमारोप्यनीयते जीवीतेश्वरी किं जीवामीति मोहमापन्नः।

पुरोहितस्तमुवाचः—राजन्! न शोकसमयः कुमारौ ते मृगया-विहाराय निष्क्रान्तौ तत् स्वयमेव विधास्यसि प्रियायाः पारलौकिकीं क्रियामिति राजानमवशं सर्वे हृषद्वतीरमानिन्युः॥

ततस्तारावतीं यथाविधि स्नापयित्वा चितामारोपयामास। ततो ज्वलितायां चितायां हा हेति भूमेरपि दारुणो नभसोपि निपातनः नृपतेरन्तःकरणशून्यकरणं करुणध्वनिरापतत्ततस्ते पुरोहिताद्याः समाप्तनिर्व्वापक्रियं सन्तताश्रुविक्लियपुराणचन्द्रशेखरमिव तच्छ्मशानवासमेव समीहमानपतङ्गमिव ज्वालाभिमुखमुत्पतन्तं बलादेव स्वपुरमानयाञ्चक्रुः। ततोऽमात्या नानाविधशास्त्रलोकयुक्तिभिः संशांत्वयामासुः ततो दिवानिशमेव तत्र तत्र निर्वृतिमलभमानस्तत्तन्मन्दिरप्रासादक्रीडाकाननाकृत्रिमशैलसरांस्यवलोक्यातीव शोकभराद्गलदश्रुलोचनः श्वासावरोधसगद्गदवचनो विललाप।

एतन्मन्दिरमिन्दुसुन्दरमुखी यत्र श्रमाबाधयद्
विश्रान्तं मालयमेतदत्र पणितैर्यत्रानयच्छर्वरीं।
वेदीयं निशि चंद्रिकोत्सवसुखं यत्राहृतं नु त्वया
सर्व्वं चाहमिवास्ति हन्त! मलिनं प्राणेश्वरीं त्वां विना॥४०॥
अत्रोद्यानलतातिरोहिततनुः सा सोत्कमासादिता
मत्पाशोऽत्र न वापराधशतीदाम्ना तया कल्पितः।
अत्रालीगणगीतकैर्दयितया हिन्दोलिकाङ्गीकृता
सर्व्वं तत् स्मृतिमेति विस्मृतिपथं केनाद्य यातु प्रिया॥४१॥
एतत्सौधवरः सकैरवसरः फुल्लाश्च जातीलताः
ज्योत्स्नीयं रजनी मरुन्मलयजो गीतानि तन्वीस्वनः।
सर्व्वं तत्सविधे सुधारसतया प्रस्यन्दते मां प्रति
क्रूरं तद्विरहेऽद्य दुर्दमविषज्वालावली वर्षति॥४२॥
वल्लयस्ताः शिशुशाखिनश्च सफलास्तत्पाणिदत्ताम्बुभिः
क्रीड़ाकाननचारिहारिणकुलं कीराश्च धीरा इमे।
किङ्कर्थ्यस्तत्र किङ्कराभकगणः सद्मानि तानि प्रिये!
कस्यालं प्रमुदे विनाऽद्य भवतीं भूषैव निर्ज्जीविनः॥४३॥
सुमाशा मम तारका यदि दृशोः केनैतदालोकये
सा मे चेतसि जृम्भते प्रियतमा कस्माद्वियोगव्यथा।
प्राणा मे यदि तत्सहैव हि गता किं प्राणिमीह क्षणं
चिन्ताचर्व्वितचेतसेति निपते व्यामोहवारां निधौ॥४४॥
तत्तत् केलिकुतूहलेन रभसालापेन पूर्व्वं तया
सार्द्धं हन्त! निषेविता खलु मयाया या विहारस्थली।
सा सा शोकविमर्मरेण विधुतश्वासस्फुटद्वक्षसा
दृज्जीवेन मया जलज्जनगलद्बाष्पांशुभिर्वीक्ष्यते॥४५॥

नो मत्स्विद्कृते किमप्यपकृतं त्यक्ता न गेहक्रिया
नोक्तं वा प्रतिकूलमीषदरुणेनाक्ष्णा न वा वीक्षितम् ।
तत्तद्धेतुसरोषयायि ! मयि किं चाग्रे सखीसम्मदम्
पश्यन्त्याद्विवमीक्षितं श्वसितकल्लायन्मुखाम्भोजया ॥४६॥
आरामो वनमद्य हंत विषमं क्रीड़ामृगाः श्वापदाः
पूर्णं केलिसरश्च मे विषमयं रामाश्च वामा इमाः ।
सम्पत्तिः खलु भूतिरद्य तु वपुर्जातं तनुत्वं हठात्
प्राणा मे स्फुठमाशुगाः खलु विना त्वां नाममात्रस्थिताः ॥४७॥
तेषु तेषु समयेषु तन्वि ! ते नानि तानि चरितानि संस्मरन् ।
सर्वदैव सुविशीर्णजीवनो जीवलोकवसतिं न तर्कये ॥४८॥
प्रतिनिशिदिवसेक्षणे क्षणार्द्धं त्रिदिवगतापि सदा स्थिताहृदन्तः ।
स्मृतिपथमववन्ध जीवितं मे हरतिसखी सखितां विहाय कस्मात् ४९
यस्याः पुनः क्षणवियोगरुजं क्षणार्द्धं
सोढुं न चाभवमपारतयैव पूर्व्वम् ।
भूयो विलोकनकथां समतीतवत्यां
तस्यां कथं भवतु जीवितधारणं मे ॥५०॥
संयोगः स वियोगएव जगतां छित्त्वैव हा किं गता ।
शोकैः किं खलु दृश्यते त्वनुगतः पश्यामि जीवेश्वरीम ॥५१॥
चेतस्त्वं त्रुति मे हि हन्त विकलाः प्राणाः स्फुटन्तु द्रुतम् ।
यातायातनिवर्त्तते सकृदिहाभ्येतु क्षणं प्राणिमि ॥५२॥

—इत्यादिविलापविकलः स्फुरत्तीव्रदुर्वारशोकसंतापसंशोषितधैर्याम्बुधिर्निरवधिशुद्धान्तहुताङ्गनाकरुणाबाणीतमायोद्रवदह्यमानहृदयस्ततोपसृत्य स्वर्धुनीकूलमागत्य कानिचिद्दिवसानि संयतात्मना वसतिं व्यदधत् ॥

प्रियामुद्दिश्य प्रियतरभोगपरित्यागेनात्मानमिव क्षीणं कुर्वन्नासीत्।

अथ तत्र वसन्नेवाचिन्तयत्—

वञ्चितो जीवनस्थित्या तृष्णापरिगृहीतया।

नाश्वसाम्यन्यया मुग्धदृश्यया मृगतृष्णया ॥५३॥

—इत्यादिभावनया पुनर्द्वारगृहपविमुखो निष्क्रान्तयोः कुमारयोर्वृत्तान्ताय वदन्नचिन्तयत्। कुमारौ कुत्र निष्क्रम्य गतौ न जानामि-कथमन्वेषयामि? श्रूयते तत्सहप्रयातसैनिकपरिजनास्तावन्वेषयन्तो नासादयन्ति विषादयन्ति च मनः तदतिप्रतिकूलदैवहतकेन क्रमात् किं किं न सम्पादितम्।

उद्वेगः परमदुःसहः पुरस्तादन्तो मे मनसि वियोजितस्तयोश्च।

प्राणेश्वास्तनुज युगं विनीतरूपं दैवेन क्व च परिवाच्छितं वनेन॥५४

क्व यामि कुत्रावलोकयामि विनष्टे लोचन इव समासाद्य पुनः पश्यामि जीवलोकं लोचनयोरसायनाविव लोचनाभ्यां पीत्वा विलम्बयामि जीवितं तौ नानीयजीवितमुत्सृजामि चेत् किं गत्वा ब्रवीमि प्राणेश्वरीं मम तनयौ कुत्र स्थापयित्वा गतासीति पृच्छन्तीं तं न जाने कुत्र गतौ? किमुद्दिश्य? किं वेश्यौ? किमाहारौ? किं परिच्छदौ? अपरिशीलितपथिकचर्याचातुर्यौ राजन्यकुमारवर्यौ आश्रयादिहितवे कं कथं वा प्रार्थयन्तौ मातरं प्रति किमनुशोचन्तौ किं बन्धून् सपरिजनान् स्मरन्तौ किं मां दैवहतकं वा विगर्हन्तौ किं कान्तारं कं वा देशं समनुप्राप्य वर्त्तेते। किं च तयोरालोकमतो जनमनसि सत्यमीदृशा एव वितर्काः प्रादुर्भविष्यन्ति। क्वावेतौ युवाविव बालवैराग्यतो निर्मोहौ दाशरथीव पामरेण स्त्रीजितेन केनापि निर्वासितौ सत्यमेतयोः पितरौ

तावणौ तारणा बान्धवाः परिजनाश्च कथं ते नानुगच्छन्ति नान्वेषयन्ति जीवितं वा धारयन्ति इत्यादि बहुविलप्य अमात्येषु राज्यं निक्षिप्य युवयोरन्वेषणाय निष्क्रान्तः ॥

सुनन्दो निःश्वस्यावदत्। किं महाराजस्यापि राज्यतो निष्क्रान्तिः प्रबलादेवाक्रान्तिरनुमीयते।

मन्ये ऽकाले शुभान्यशुभानि च क्रमतो।
ग्रथितानीव परिस्फुरन्ति विधातुर्मनसि ॥५५॥

यतोऽस्य।—

पौष्याकल्पककुल्यजापरिणयः सख्यं सुराधीश्वरैः
साम्राज्ये प्यभिषिक्तआत्मजयुगप्राप्तिः पुरोदर्शिता।
मिथ्यासंशयआत्मजद्वयविनिष्क्रान्तिः प्रियायाम्रृतिः
देशाद्विच्युतिरद्य हन्त! विधिना क्रूरेण सम्पादिता ॥५६॥

अप्राप्यन्तं सुहृदमीश्वरमग्रजातं
तातीन मे न जननी न च बन्धुवर्गाः।
स्वर्गोपि न प्रियतमः किमिवान्यभोगा-
नात्मापि च प्रियतयो खलु रक्षणीयः ॥५७

—इति जल्पन्तमवशान्तुल्यबकुसुमकेतुभ्यामानीय जलाशयं दर्शयामासतुः। ततः कृतोदकक्रियः सोमानलमुनेराश्रमं प्रविश्याकस्माद्दलीमुखतामवाप। तावपि तथा वदनविरूपतां प्रापतुः। तस्य मुनेस्तपस्यतस्तपोविघ्नाय विडौजसा विनियुक्ता गन्धर्ववैद्याधरकुमार्यः कुमाराश्च सुकुमाराः सुवदनं लालित्यं दर्शयन्तः क्षोभमस्य जनयामासुः। ततः सवशीवशीकृत इव रोषावेशेन व्रहितं परिचिन्तयन् शशाप। यः कश्चित्तापसमन्तरेण तरुणी तरुणो वा ममाश्रमं समायाति स कपिवदनेन दृश्यमानो भवि-

ष्यतीति। ततस्ते शाखामृगाननाः परस्परपरिचयमलभमानाः क्व गतः सुनन्दः क्व तुम्बुरुः क्व कुसुमकेतुरिति विचारयन्तो नाना स्थानविगता बभूवुः। एवन्तुम्बुरौ कुसुमकेतौ चापहृते सुनन्दः क्वापि विमलसरसि स्नानमाचरन् सलिलप्रतिबिम्बितस्ववदन-मालोक्य विस्मितः समचिन्तयत्। किमिदमाननवैपरीत्यमात्मनो-ऽवलोकयामि? सत्यमयमाश्रमस्यैव दुष्प्रभावः तावपि सत्यन्तुम्बुरु कुसुमकेतू तथाभूतौ परस्परपरिचयपराङ्मुखौ निष्क्रम्य मामिव मृगयतः मयापि विधिदुर्व्विधानवशीकृतेन दुष्कृतेन पूर्व्वजन्मनः सत्यमपरिचिताविव परित्यक्तौ न त्यक्तोऽस्मि किं जीवितेन? न हि जीवितं मधुव्रताद्वा तयोर्व्वा प्रियतरं। किन्तु क्व गतास्तेऽस्म-भ्योपि प्रियतरा वयमद्यापि तिष्ठाम इति समुपालम्भमेव वर्त्तन्ते प्राणाः। भो भो प्राणाः! यद्यपि यूयं सर्व्वप्राणिनामिव ममापि प्रियतमास्तथाप्येतादृशि विपदि समुपालम्भकारिणो न स्पृह-णीया व्रजन्तु भवन्तः विलम्बयथ चेद्व्यापादयिष्यामि वः। न चेत्प्राणाः प्रयान्ति तत् किमिह करणीयं स्वयमेतान् घातयामि चेत्तदप्यशिष्टाचरितमपौरुषं पुरुषेश्वरकुलसम्भवानां। भवतु तावदन्वेषयन्नेव पर्य्यटामि तदप्येकाकिनोऽनभिज्ञस्य परमदुर्व्वा-रशोकदुर्बलीकृतस्य दुष्करमिति ततएव तीव्रमाचरामि तदपि तेषां प्राणेभ्योपि प्रियतमयोः सुहृदोः गुणज्येष्ठस्यानुसन्धान-पराङ्मुखस्य मे कृतघ्नतयेव पराहतं न जाने कस्यां वा घोरायां विपदि विपन्नो मे ज्यायान् न तु प्रकृतिस्थो मां कुसुमकेतुम-जहत् मां विना तदनुसन्धानं कोन्यः करिष्यति? तदपि न जानामि कुत्र गत्वा विचारयामि अथवा सर्व्वमेतदशक्यमिति सर्व-पापसन्तापमूलोन्मूलनोपायं परमध्यानयोगमेवाश्रयामि तादृश-

प्रियसुहृदोनन्यसहायस्य समुदरणमन्तरेण कथं सुखस्विष्टामि इति कृतघ्नता प्रज्ञा न ध्यानस्य पदमपि दास्यति।

कल्याणं यदि मे तपोह्वृतरं तप्तोस्मि चिन्तानलै-
र्वैराग्यं यदि मे हितं तदपि मे जातं स्वदेहेष्वपि।
कार्य्यञ्चेद्भ्रमणं तदर्थमसकृद्भ्रान्तोस्मि दुर्दैवतः
स्यान्मृत्युर्वरमस्य चेत्तदिह किं जीवामि का ते गतिः॥५८॥

तत् किं करोमि कं पृच्छामि भगवन् दुर्घटनाविधानविधे! विधेहि स्वयमेवास्य प्रतीकारमुपदेशं वा सर्वबुद्धिप्रेरकोसि सत्यमेतावत् प्रपञ्चघटनयैवानुमित भवानेव सर्वज्ञः सर्वविधान-विज्ञतमो जगति यद्दारुयोषामिव चराचरमयीं जगतीं नर्त्त-यसि, तत् प्रभो! प्रसीद दुर्बलस्य विपन्नस्य मोक्षोपायमजानत। इत्यादि विलपन्नेव पर्य्यटन् क्रमेण गुरोर्हंसस्याश्रमं प्राप्तवान्। गुरुरपि तं प्रियशिष्यं तथाविधव्यसनव्याकुलं विज्ञाय शोकाप-नोदाय समवादीत्—कुमार! माविषीद, पूर्वमुप्तानीव बीजानि प्रागुजन्मकृतकर्म्माणि प्रादुर्भवन्त्येव; सर्वत्र पश्य—धर्म्मपुत्रतयाव-तीर्णेन धर्म्मेण द्युतदोषात् किं किं दुःखं नानुभूतमासीत् यत्र यज्ञ-सेनयज्ञवेदीसमुद्भवायाः स्वर्लोकललनायाः केशाकर्षणं वा हरणादीनि धूर्त्तर्धार्त्तराष्ट्रादिभिः प्रापितानि त्रयोदशवर्षाणि वनवासाज्ञात-वासाभ्यां परिक्लिश्य धार्त्तराष्ट्रान्निहत्य राष्ट्रं भुक्तवान्। नलोपि द्यूतनिर्जितः स्वनागरिकेष्वपि भैक्ष्यभक्षमलभमानस्ततोनिःसृत्य कलिना बध्यता विवसनीकृतोनिखिलगुणोदारं स्वदारमप-हाय परदास्य प्राप्तवान्, कालेन कलिना त्यक्तः पुनरपि राज्यं प्राप्तवान्। दाशरथीरामोपि राज्याभिषेकदिवसएव पितृदत्त-निर्व्वासचतुर्दशवर्षभ्रमवासरचकृतस्त्रीहरणनागपाशबन्धनादीनि

दुःखान्यनुभूय राक्षसराजं रावणं सपरिवारं निहत्य प्राप्तस्वराज्याभिषेक एकादशसहस्रसंवत्सरं निरस्तसर्व्वापदं जनपदम पालमास। परिपूर्णभावेन समवतीर्णोपि भगवान् श्रीकृष्णः कंसभयाद्गोरक्षणनन्दव्रजक्लेशवासादीन्यनुभूय कंसं निहत्य निपतितया जातान् दितिजातान् घातयित्वा धर्म्मपुत्रादीननुगृह्य षोड़शसहस्रस्त्रीभिर्गृहधर्म्ममनुभूय पुनः स्वर्लोकं सनाथीकृतवान्। तिष्ठन्तु नरेन्द्राः—परमज्ञानी। वशिष्ठोपि सुतशतशोकव्याकुल आत्मत्यागाय भृगुपातवह्निजलप्रवेशपाशबन्धनादिकुचेष्टाः स्वीकृत्य पुनः स्ववधूगर्भस्थपौत्रं विज्ञाय शान्तिमुपगतः। तिष्ठन्तु दुःखबहुला मर्त्यलोकवासिनः—दुःखमिश्रसुखैकशालिनः स्वर्गेपि दुःखानुभूतिं श्रूयते, देवेन्द्रेणापि कति कति दानवैः पराजयोलब्धः। जगद्विधात्रापि महादेवात् मस्तकच्छिन्नवेदनानुभूता। महादेवेनापि सतीवियोगादनिर्वचनीयसन्तापेन तत्तद्देशाटनं साधितं। विष्णुनापि स्वधनुष्कोट्याक्षशिरश्छेदवाजिवदनता प्राप्ता। निःशेषसंसारसागरतरणतरणिभूता जगद्धरणिर्भगवती सती पितुरवमानावमाना तनुं तत्याज। तस्मात् नरसुरमुनीन्द्रा लीलाकलेवरा अपि स्वयमीश्वरा अपि सर्वशास्त्रज्ञानदिव्यास्त्रनिवारिताशेषविपदोपि सम्यक् तपोज्ञानाभ्याससिद्धा अपि समुपासितब्रह्मा अपि परमात्मविधानवशीकृताः कर्म्मविपाकमनुभवन्त्येव—कात्र व्यथा—का वा परितापः—को विषादहेतुरनित्येऽस्मिन् क्षणं क्षणं परिवर्त्तमाने सुखदुःखभ्रमे ?—

अपिविज्ञाततत्त्वानां भाविभावा दुरत्ययाः।
किं शोकैर्दुःखमाप्नोषि सुखाय धृतिमाश्रय ॥५९॥

एवमसौ शान्तयित्वा समाश्रमपदे रचितः समवापेचयेति कथितोयं प्रश्नवृत्तान्तः ॥

श्रीरश्रीरघुनाथदेवशिवदादेव्योस्तनूसम्भवः
शश्वोभक्तिमृणालवृक्तिरमलश्रीराजहंसार्भकः।
पौराख्या नवचन्द्रमौलिकथया श्रीरामनाथः स्वयं
चम्पूं गुम्फितवान् तदीयकथयोच्छ्वासोऽष्टमोयं गतः ॥६०॥

इति श्रीभगवद्भक्तिरसेन्दुरराजहंसार्भकश्रीरामनाथशर्म्मविरचिते चन्द्रशेखरचम्पूकाव्ये मधुव्रतमाधवीये सुनन्दानवैपरीत्यो नामाष्टमः ॥८॥

राजा। वयस्यं प्रत्यब्रवीत्—कथ्यतां शेषवृत्तान्त एवां श्रायते चेत्। वयस्यः कथितुमारेभे—एतत् श्रुत्वा सुनन्दोऽचिन्तयत्। अहो तावदनेन पूर्व्वजन्मसुहृद्देवकथाप्रसङ्गमुत्थापयता प्राणाधिकप्रियोभ्राता मे मधुव्रतश्चिरं नष्टसमुद्दिष्टो भवन् यस्य मुनेरुपदेशेन तं मोचयितुं वा शक्नोमीति (स्वगतं विचिन्त्य प्रणम्य) प्राञ्जलिर्मुनिमब्रवीत्—भगवन्! यदि प्रसीदसि? तदादिशत देशं, यत्र तादृशदशामासाद्य वर्त्तते मे पूर्वजमुनावोमिति ब्रुवति यन्नान्तरे कोप्यपरस्तपस्वी दूराध्वगमनश्रमस्तत्रागत्य मुनिमभिवादयामास—भगवन्नहं हंसस्य मुनेरन्तेवासी पुष्करनामा अभिवादये,—इति। मुनिरप्यायुष्मान् भव सौम्येति प्रत्यभिवाद्य आसनादिना संपूज्य परिपृष्टकुशलं तमब्रवीत्। भगवन्! जानासि वा बहुकालं तीर्थाभिषेकाय निर्गतानां श्रीमद्गुरुचरणानामुदन्तं, दृष्टोवा परमाराध्यतमोभगवान् पर्य्यटन् परेच भवता कुत्रापीति। स तमुचे—आः कथं न जानामि, जनोहि तदादेशतः समागतोऽस्माभिरिति तदाकर्णयतु भग-

वान् श्रीमद्गुरुपादास्तु हिमगिरिमधिरुह्य हिरण्मयवर्षसमीप-शिखरं प्रयास्यन्ति, यात्रा वर्त्तते, तत्र वार्षिकीकौमुदीमहोत्स-वस्य कुमुदबन्धुशेखरस्य, तत्र देवपूर्वदेवनरकिन्नरसिद्धविद्याधर-गन्धर्व्वाप्सरसामेकत्र मिलनं भवति ; तद्दिवसएव तीर्थ्यत्रिकं च तेषां गन्धर्व्वादीनां प्रवर्त्तत: सर्वसाधारणदृश्यं। किन्तु चन्द्रशेखर-नामा नृपतिरपि पुत्रावन्वेषयन्नेव श्रीमानसौ गुरुपादैर्मिलित-स्तेनापि सहजकरुणासरलस्वभावेन पुराणेतिहासकथाप्रसङ्गेन प्रतिक्षणप्रकाशितपरमेश्वरगुणानुवादपरमामृतेन तच्छोकज्वल-नं निर्व्वापयन् सङ्गीकृत आदिष्टश्च—पुष्करमभाश्रमं गत्वा कुशिशयीवाच्य:—सुनन्दमादाय मत्सकाशमागच्छेति। अथ वानरमुखं दृष्ट्वा किञ्चिदन्यदपि स्मृतिपथमारुरोह, हिमशैलाभि-गन्तवता मया बदरिकाश्रमसरणिसन्निधानएव वने वानराननौ सुनन्दसुनन्देति उच्चैराह्वय भ्रममाणौ कावपि कुमाराववलो-कितौ ; तत्श्रमस्मि भवते—वयं साधयाम: स्वमाश्रमं। तत: परस्परमभिवाद्य पथानमारुरोह। सुनन्द: समचिन्तयत्—सत्य-मिमौ मम सखायौ तुम्बुरुकुसुमकेतू वानराननाववलोकिता-विति चञ्चल: प्रणम्य तमुवाच—भगवन्! त्वत्प्रसादादद्य श्रुता विचित्रा परमया विनीतकथा। पूतोस्मि, मित्योत्कण्ठितास्मि महसा ज्ञपीकृतकृत्याशुचन्द्रशेखरं द्रष्टुं भवतामत्रभवतां सह-समुपार्जितसुकृतसञ्चयेन शैलसंस्थापितं लिङ्गमूर्त्तिधरं चन्द्र-शेखरञ्चेति॥

॥ मुनिरुवाच ॥

यदभिरुचितं, किन्त्वतिदुर्गएव हिमसम्भारशान्तितया गौरी-गुरुरेव गिरि: तथापि श्रीमदस्मद्गुरुपादानां सङ्गतएव सन्त-

रिष्यसि ? तत् प्रणीयतां—ततः सर्वे कुशेशयमुखाः प्रतस्थुः। ततः कियद्दूरमुपक्रान्तेषु सुनन्दोऽब्रवीत्—भगवन्! वदरिकाश्रमाभ्यामासरणिमा गन्तव्यं, तत्र पुष्करमुनिनावलोकितौ वक्रीमुखौ सर्वथा मम सखायौ—तुम्बुरकुसुमकेतू भविष्यतः, त्वत्प्रसादाद्यद्विमिलतस्तदा तावपि सङ्गीकर्तुमिच्छामि॥

॥ मुनिरुवाच॥

तव रुचिनैव गन्तव्यं। ततोबहुतरनगरग्रामारण्यसरितः समुल्लङ्घ्य वदरिकाश्रमसीमानमापुः, तत्र कियद्दूरकाननमध्यतः कुसुमकेतुं तुम्बुरुरब्रवीत्—पुनरपि सुनन्दसुनन्देत्याह्वयतां वानरामनतयातिनिर्जनाज्ञया न स विकाशमेष्यति—तुम्बुरो! कुरु शब्दमुच्चकैः शब्दतो मिलति वा भवानिव। सुनन्दोपि तदाकर्ण्य सहसोच्चैरभाषीत्—सखे कुसुमकेतो! सखे तुम्बुरो! एषोस्मि सुनन्दोमन्दभाग्यः; युवयोर्विप्रयोगाद्विनिष्क्रान्तजीवितः—पुनर्दर्शनोत्कलिकया सदैवसहचारिण्या दाह्यमान इव कथं कथमपि सञ्चरामि; तद्युवामागत्य मामवलोकनामृतेन जीवयतामाकलयतां च महाराजमधुव्रतश्चेत्वं तौ तु तत्क्षणात् प्राप्तजीविताविव सहसा समुपेत्य सुनन्दं पप्रच्छतुः—क्व प्रस्थितोऽसीति। स चाकथयत्—प्रालेयशैलशिखरं यात्रार्थं प्रस्थिताः श्रस्तव श्रीमद्गुरुपादा अपि पुरः प्रस्थिताः। राजापि तैस्संगतः समाकर्ण्यमानसत्स्वैव शिथिलीभूतशोकवन्धस्तिष्ठति। तौ सहर्षमाहतुः—क्वाधुनास्ति मधुव्रतः?। सुनन्दः प्राह—मधुव्रतस्तु त्वदर्थं शिलीभूतया माधव्या सह शिलीभूतस्तिष्ठति। तौ तु समाकर्ण्य सुनन्दस्य शोकोत्थापनभयादेव रोदनपराङ्मुखौ शिलीभूताविव निःश्वस्य कथं कथमपि धैर्यावलम्ब्य स्थितौ।

कियता कालेन चन्द्रशेखरेण हंसेन समागम्य मिलिताः सन्तः
कियता कालेन प्रालेयशिखरिणि शिखराणि सर्वकालकुसुमित-
चम्पकाशोकवकुलपुन्नागकेसरशिरीषशालहिन्तालकुलकालीयकद-
लीकाननकमनीयानि मृदुतरपवनसञ्चारप्रचारितपरागचयपट-
वास-प्रकाशित-महामहीमवाभिराम-मणिमयेष्टकावबद्धतीरपरि-
सरन्ती रोपजाततरुणतरुच्छायाविचित्रविमलशम्बरमम्बरतल-
मिवखण्डमण्डितं परितः प्रफुल्लकुमुदकल्हारकुलं क्वचित् कल-
हंसकुलकेलीकलितकुतूहलं क्वचन मधुमत्तमधुव्रतझंकारमनोह-
रन्तोयोपकण्ठमण्डनशाखिशिखरान्तरान्तरकूपकारमवाप। तत-
स्तत्तीरधरण्यां शिखरमेकं स्वशिशिरनिवारणाय स्तंभरूपकर-
सहस्रेण सस्तम्भिततरणिमण्डलेनेवोपरिचिन्तामणिमहामण्डपे-
नातिविराजितं अभितोनिर्म्मितपद्मरागेन्दुकान्तमरकतेन्द्रनील-
मण्डपैररविन्दकैरवेन्दीवरैरिव परिपूजितमस्तकं अन्तरूपवन-
सम्भूतभूरितभूरुहमस्तकैर्घनच्छविं अधस्तात्कनकभित्तिपीतपटा-
वृतं सहपलच्चणानुगतं राममिव सदाभिराममवलोक्य भक्त्या
प्रणेमुः। ततस्तत्सरसि स्नानादिकं समाप्य तन्मणिसोपानेन
समारुह्य द्वारपालतया स्थितं गिरीनन्दिनीनन्दनं स्तुत्वा
फलाद्युपहारैः संपूज्य देवालयं प्रविश्य विधाय च श्रौतेन
विधिना विधिविष्णुपूजितपादपद्मस्य शैलेश्वरस्य पूजाभिषेका-
दिकं गद्यपद्यमयिस्तुतिभिरनवद्याभिः स्तुवन्तोदिवसावसान-
वसानमासादयाम्बभूवुः। ततस्तस्यामेव निशायां निशाधिनाथ-
मयूखमहार्णवमग्नतां प्राप्तवति निजवति तरङ्गभङ्गितामिवात-
वति सर्वतः पर्वतायमानस्फटिकमणिप्राचीरप्रासादशिखरैश्चाद्न-
रिन्द्रनीलवेदीस्थलनारायणाय नाभिपुण्डरीकाय माममण्डपा

पुरतोनिर्मितचन्द्रकान्तागणिकयेव रागादिव कुङ्कुमानुलिप्तबाहु-जालेनेव कनकस्तम्भचतुष्टयेन विधृतं चन्द्रमण्डलद्वोपरि-विद्योतमाने वीतानेतद्वितानचन्द्रबिम्बचुम्बमायेव लम्बमान-स्थूलमुक्तावलितारकाभिरभितोदर्शनीयः परितोविराजमानराज-तद्दीयरत्नशाखाग्रेषशिरोमणिसदृशदीपमालादेदीप्यमाने कृष्णा-गुरुधूमधारासमूहसंशायिताश्विश्वासधारासमूहैरदम्भवनचलसत्-गणच्छायाविस्मायितगतिमत्मीनमकरप्रचारिरङ्गसागरे सामाजि-काश्चन्द्रशेखरमेव शेखरतया संस्थाप्य इतरेतरालङ्कारतां प्रापुः।

तत कुतश्चिद्दीपादागतोऽस्त्रवं सकलसामाजिकसमनुरञ्जनाय गौरीस्वयंवरं नाम नाटकमभिनवं नवरसवर्णनाविलक्षणं नाट-यितुं पुरतोनान्दी पपाठ।

तद्यथा—

दृष्टिच्छटाजितसमस्तवशीन्द्रदर्प-
कन्दर्पदेहदहनोद्धतदीप्तिरैशी।
त्वाम्पातु सम्प्रति गिरीन्द्रसुताननेन्दु
पीयूषवारिनिधिमज्जनशान्तरूपा ॥१॥

अपि च—

एकेन पर्वतसुतापह्नतेन ताव-
दन्येन कामुकगणीक्षणविक्षितेन।
किञ्चेतरेण मदमार्दननिर्दयेन
नेत्रेण वल्गितघनस्मितयेन पातु ॥२॥
पाणिग्रहे दुहितुरन्तिकसंस्थितेन
स्वेदोदबिन्दुचयचित्रितमीक्ष्य पाणिं।

मातः ! चिपेह कुसुमाञ्जलिमित्यशेन
दिष्टा क्रिया नतमुखी गिरिजा पुनातु ॥३॥
॥ नान्द्यन्ते सूत्रधारः ॥

प्रस्तावनादिक्रमेण तारकवधाय सुरगणादेशेन कुमारोत्पत्तये कामस्य प्रयाणसूचनावसन्तकामयोर्ज्ल्पतोः प्रवेशेन दर्शिता रतिमामन्त्र्य हिमालयप्रयाणस्य प्रथमाङ्के। द्वितीयेपि पारिजातोद्याने भगवतः प्रवेशः कुसुमापचयार्थं पार्वत्या अपि प्रवेशः नन्दीश्वरमुखेन स्वामिनः परिचर्य्यार्थं पर्वतेन्द्रेण पुत्रीयं समर्पितेति सूचना। पार्वतीश्वरयोरन्योन्यदर्शनं च दर्शितं तृतीयाङ्के। प्रावेशिक्यां पुरमथनप्रविकटकोपकलापज्वलितकपालनयनानलज्वालाजालसलभीकृतहरमोहनार्थप्रवृत्तमन्मथोपवर्णनसूचनया गणयोः प्रवेशस्तन्मुखेनैव महाकालभृङ्गिमुख्यगणेश्वरेषु पुरस्तान्मदनशरासादितविकारेषु कामदेवस्य तपोवनान्तःप्रवेशः पार्वत्याः कुसुमसमर्पणसमयसंस्पर्शनं ईश्वरयोर्विकारदर्शनेन महाकालस्य स्मरमवगत्य भगवतः शापवचनसूचनं। तद्यथा भृङ्गिनं प्रति स्मरशरवशेनैनामूर्वशीः कामदेवसहायार्थमागतां पश्यन् प्राप्तविकारस्तद्भावनया माधवीलतां वीक्ष्य जड़ीभूतस्य कामः प्राप्तविकाशोमत्तविधमविशत्। तस्मात्तुषजन्मसमासाद्य अस्या अवस्था माधव्यभिधानाया मानुषीभूतायाः कृते पाषाणत्वं व्रज। महाकालं प्रति यत्त्वमावयोर्जगत्कारणयोर्भावविकारमुपलक्ष्य सस्मित आसीत्—तस्माद्वरोभूत्वा वानरमुखो भव। तुम्बुरुवसन्तावपि स्मरसहायायार्थमागतौ प्रति युवामपि मानुषावेतयोः सहचरौ भूत्वा शाखामृगमुखमवाप्स्यथः। ततः ससख्याः पार्वत्याः तपसे तपोवनप्रवेशः विरहवर्णनं चेति। ततश्चतुर्थाङ्के

प्राबेशिक्यां हरमाधवयो: प्रवेशेन भगवत: पार्वतीं प्रत्यभिलाष वर्णनस्ततोवधूतवेशेन प्रविश्य निजमिन्दोपहासविकारोन पार्व्वत्या भावपरीक्षा तदन्ते परिचय: सप्तर्षीणां प्रेषणम्। पार्व्वतीवरणहेतो: पर्वतेन्द्रायति। तत: पञ्चमाङ्के प्राबेशिक्यां महाकालभृङ्गिनो: प्रवेश: कृत:।

तत्र महाकालो भृङ्गिणं प्रत्युवाच—

सम्भवास्तु त्वमिच्छ त्वं नास्ति नास्त्येव सम्भव:।
यद्दावयोर्दुर्विपाक: शम्भु सम्भवयोरपि: ॥४॥
यदि पुण्यौघपाकेन प्रीणाति परमेश्वर:।
तत्पदं प्रार्थनीयं स्याद्यतोनावर्त्ततेपुन: ॥ ५ ॥

ततोभृङ्गी तं प्रत्युवाच—भ्रातर्भगवतैव सम्प्रति परिणीताया: पर्व्वतेन्द्रसुताया वासमन्दिरद्वारिगणाध्यक्षतया स्थापितयोरकस्मादपरिकलनात्रमेकदर्थितवेशेन निर्गताया अम्बिकाया अकामदर्शनादावयो: कोपराध: ? येन शप्तौ स्व:—मानुषौ भूत्वा मृगोप्रस्तरतां प्राप्तौ तु महाकालो वानराननतामिति तत्त्व-पाषाणपुत्रीयं पाषाणप्रकृत्या निर्विवेका निष्करुणा कठोर-हृदया चेति। भगवत्योरिकार्थयो: परमार्थयो: परमार्थस्वरूपयो-र्नास्ति भेद:।

महाकाल: तमुवाच—भ्रातर्नहि नहि भगवान् चिदात्मैवेषा स्त्री शब्देन चिच्छक्तिरित्युच्यते। शिवशक्तिभावमाया-मविनाभूतापि सृष्टिसमये भिन्नत्वेन प्रकाशमागतापि अर्द्ध-शरीरा सहचरी भूत्वा विचरति भगवद्भगवत्योरिकार्थयो: परमार्थस्वरूपयोर्नास्ति भेद:, यथत्स्वभावश्भगवान् शिभर्त्ति तथैवेषापि।

ईश्वरस्य महामाया ब्राह्मीषा ब्रह्मरूपिनः।
श्रीरेषा जगतां पातुर्महाकालस्य कालिका ॥६॥
अचिन्त्यस्य किलाचिन्त्या शक्तिरेषा भवारणिः।
एषैव बन्धयित्री मोमोचयित्री च संसृतेः॥७॥
न भ्रातर्मनसाप्येनामपध्यातुं मिहार्हसि।
एषात्मविद्या स्वगुणैर्निगूढ़ा स्वात्मैव संशुद्धचिदेकरूपा ॥८॥
प्रपञ्चहेतुः सततप्रपञ्चापञ्चात्मशक्तेः परमात्मशक्तिः।
गङ्गाद्रिपुत्रीहविवद्भूर्त्तेरभेदएव श्रुतिषु प्रसिद्धः॥९॥
स्त्रीरूपिणीयं हरिरेव साक्षात् पाङ्नारदोप्याह सुराधिनाथम्।
न स्मरसि हरमोहनेच्छ दावान्तत्तद्दिकारदर्शनाद्भगवतैव शप्तौ॥१०॥

तद्भाविभावानुरोधेन तदनुकारिण्या देव्या शप्तौ स्वः पूर्व्व-मावयोरेवापराधो न तयोः। तदेव कुर्व्वः। शिवावश्याष्टमङ्ग-लमहोत्सवे देवदेवाङ्गनागणमध्यगतौ हृष्टौ समागमिष्यतः एत-दवसरे आवाभ्यां शापमोक्षाय प्रार्थनीयौ देवौ।

ततो नेपथ्ये मङ्गलगीतिर्याता।

भृङ्गी महाकालमुवाच—मङ्गलगीतिः श्रूयते, भगवान् पार्व्वतीसखः समायाति तदावां बहिः प्रतीहारे तिष्ठावः।

(इति निष्क्रान्तौ)

ततो भगवत्या सह भगवतः प्रवेशोदर्शितः। भगवानपि सुरवधूभिः कृतमङ्गलाचरणः प्रसादसुमुखः प्राह—ये ये मत्-प्रासादाकाङ्क्षिणो बहिर्द्वारि वसन्ति तान् प्रवेशय॥

ततो भगवच्चन्द्रशेखरेण रतिः प्रवेशिता। तया प्रणम्य काम-स्योत्पत्तिः प्रार्थिता। भगवान् तामूचे—

परिपालयता प्रियाप्रियं हृदयेऽङ्गीकृताएवहृच्छयः।

जगतां हृदयेषु जीवितस्तव भर्त्ता न चिरान्भवत्वतः ॥ ११ ॥

पुनस्तां सकामकामप्रार्थनयावनतमुखीं प्रसादसुमुखो भगवानुवाच—

निगृहीतुः सुरारीणां लीलामानुषविग्रहात्।

द्वापरान्ते हरेरस्मात् शरीविग्रहमाप्स्यति ॥ १२ ॥

ततस्तस्यां निष्क्रान्तायां प्रवेशितौ भृङ्गिमहाकालौ प्रणम्य प्रोचतुः—

भवचरणविच्छेदव्याधिर्वां परिबाधते।

भैषज्यमस्य भगवन् प्रार्थयेऽवधिरूपिणम् ॥ १३ ॥

भगवानुवाच—

अयं जन्मनि तस्मात्मो यदायं स्त्रीत्व मेष्यति ॥

प्रसङ्गेन च केनापि शापादस्माद्विमोक्ष्यथ ॥ १४ ॥

कुमारौ पुनरूचतुः—

तेजसो भवतोभूत्वा भूतनाथ भवान्तरे॥

कथम्भवावो भगवन् मनुष्यतनुसम्भवौ ॥ १५ ॥

भगवानुवाच—

कारणेन च केनापि भूत्वा पौष्यनृपात्मजः।

काकुत्स्थजो पार्वत्याम्भूयोजनयितास्मि वाम् ॥ १५ ॥

ततः पार्श्ववर्त्तिनश्चण्डेश्वरमादिदेश चण्डेश्वर! त्वमपि चण्डबल काशीश्वरो भूत्वा प्रसङ्गेनानुकूल्यं भजानयोरनयोः सहैव ते मदन्तिकागमनं भविष्यति। एतदन्तरे तद्भृङ्गान्तः सर्व्वान् सामाजिकान् विस्मापयन्नन्तरसप्रवक्तकोलसंक इव तद्दूरवर्त्तिशैलकुञ्जाभ्यन्तरतः शापमुक्तये तनयत्वोभूत्वा तथैव माधवीं गृहीत्वा ससखीगणां समागतोभूत् वानराननाः अपि पूर्वम्नरा- बना विरेजुः सुमन्द-तुम्बुरु-कुसुमकेतवः। राजापि चन्द्रशेखरः

पुराणशरीरं संस्मृत्य तारावतीमपि हैमवतीमविनाभूततया शरीरगुम्फितामालोक्य मुमोद। चण्डवलोपि पूर्वभावं सम्प्राप्य चन्द्रशेखरपार्श्वचरोभूत्। मुनयः सामाजिकाश्च पुलकावलीवलितकलेवराः बहुकालकृततपःपरीपाकप्रतिफलितमहाफलं हृदयस्थमनर्घ्यचिन्तामणिसमुपलब्धफलं समधिगम्य कुसुमस्रजीव भुजगभ्रान्तिमुदस्य चन्द्रशेखरे मनुष्यतां परमहृष्टा स्तुतिवचनविकचनवप्रसूनमालया पूजयन्तः प्रसादयामासुः।

ततो भगवान् महाकालं वेतालं भृङ्गीनभैरवनामानं मधुव्रतसुनन्दनाम्नालोकेगीयमानमुवाच। भो मधुव्रत! भो सुनन्द! मातरं स्वामदर्द्धदेहगुम्फितामर्द्धशरीरिणीं शक्तिभूतामानन्दभूताश्च सदैवाविनाभूतया पश्य निःशंसयं सन्तर्पय इयौ।

ततस्तौ स्वामम्बां जगदम्बां त्र्यम्बकशरीरग्रथितामवलोक्य परमहर्षनीहाराश्रुधारानिपातनिर्मलनयननीरजाभ्यां गद्गदगिरा गिरीशं गिरीशाञ्च स्तुवन्तावूचतुः।

जयशिव शिवपत्नि तात मात गिरीन्द्रसुते नमोनमस्ते।
जयपुरुषवरप्रधानशक्ते जगदधिनाथ जगन्मयि प्रसीद॥ १६॥

शशधरकलाकिरीटं कपोटयोर्मन्दभाहकृष्णभरी।
विमलमहारजताभं शिवदं शिवयोर्वपुर्भवतु॥१७॥

अतिचित्रचर्मचीरं नागप्रसूनहारललिताशम्।
धृतफणिमणिमयकुण्डलमिडे शिवदं वपुः शिवयोः॥१८॥

स्वहृगन्तलोमदनं त्रिपुरविसर्पि प्रभावमतिसर्वगुणम्।
गत्वा सुरगजजयितं तनुमध्यालङ्कृतं वपुः सेवे॥१९॥

अर्द्धजटमर्द्धचिकुरं परुषनदर्द्धमर्द्धकान्तसुखम्।
अकुचार्द्धमर्द्धविस्तृतकपाटवक्षोवपुः सेवे॥२०॥

कान्तार्द्धमर्द्धकान्तमोङ्कारार्द्धं तदर्थं रूपार्द्धम्।
अर्द्धप्रपञ्चमर्द्धप्रपञ्चमोडे परं ब्रह्म ॥२१॥
एकावेकात्मानौ धृतैकदेहौ च लीलयास्तल्लयौ।
एकान्तभक्तिशरणौ निहतञ्जतान्तौ शिवौ सेवे ॥२२॥
एकोद्विधेव भान्तौ त्रिगुणाधीशौ चतुर्व्यूहौ।
निखिलप्रपञ्चजनकौ षण्मुखपितरौ च सप्तलोकेशौ ॥२३॥
अष्टाङ्गौ नवशशधरकलाधरौ दशदशातीतौ।
एकादश तनुभाजो द्वादशमूर्त्तेश्च मण्डलान्तस्थौ ॥२४॥
त्रिदशेशपूज्यपादौ चतुर्द्दशघ्नौ पञ्चदशभागाधरौ।
षोडशकलास्वरूपौ परापरेशौ प्रधानपुरुषेशौ ॥२५॥
पूर्णौ प्रपूर्णकामौ पूर्णानन्दात्मरूपौ च !
पूर्णेन्दुमण्डलस्थौ पूर्णेप्सितदौ शिवौ सेव्यौ ॥२६॥

सृष्टिस्थितिप्रलयकारणकर्त्तृभूत
मात्मप्रकाशमपमात्मविमर्षशक्ति।
ब्रह्मैवभातिपरमव्ययमद्वितीय
न्तस्मान्ममास्तु शिवयोः सुदृढैकभक्तिः ॥२७॥
आकाशयोर्व्वहिरन्तरयोर्गवाच-
मालासु भिन्नवदभौषितयोरतज्ज्ञैः।
चिच्छक्तिचिद्गणयोः सुतरां न भेद-
स्तस्मान्ममास्तु शिवयोः सततैकभक्तिः ॥२८॥
एकात्मनास्तु शिवयोः परमार्थभेद-
आभास्वतोरिव नचार्हति कोपि कर्त्तुम्।
तद्व्विदुर्वसतयेचितभेदशून्या
नित्यं ममास्तु शिवयोः सुदृढैकभक्तिः ॥२९॥

शक्तिर्न शाक्तिकमतेऽस्ति पुमान् शिवोऽपि
शक्त्या विनाकिमसमर्थतया विभाव्यः ।
तत् स्वीयशक्तुदयकोचकचं स्वतन्त्रं
यद्वस्तु तच्छरणमस्तु विभिन्नमेव ॥३०॥
लीलावला पुरुषतां गतयोर्गतौषु-
र्भक्तातिभङ्गपरयोः शिवयोः स्वपित्रोः ।
एकात्मनोरखिलशक्तिमतोरभेद-
भावान्ममास्तु सुतरां सुदृढैकभक्तिः ॥३१॥
यामीश्वरीमिति वदन्ति वदन्ति तञ्च
नाम्नेश्वरीमिति भजन्ति वचोविभेदात् ।
योर्यो महेश्वरपदे स महेश्वरायां
तस्मान्ममास्तु शिवयोः सुदृढैकभक्तिः ॥३२॥

—इति प्रमोदपुलकप्रस्वेदप्रकटोत्कटभावावेशवशौ वशिनौ निपेततुः ।

शिवावूचतुः—वत्स ! मधुव्रत ! अनया पूर्वसङ्कल्पितया माधव्या सहावयोर्लब्धप्रसादः समाः सहस्रमात्मकर्माणि कुर्वता महन्तं साम्राज्यमुपभुज्यानेनैव शरीरेण गाणपत्यमुपेत्यावयोः सविधमुपैहि वत्स ! सुनन्द ! ज्ञानवैराग्यसम्पन्नोऽसि न ते कश्चिदन्तरायः।

सुनन्दः प्रणिपत्योवाच—भगवन्निदमेव समीहितं मधुव्रतेन स्वल्पकालहेतोर्न संवासत्यागेन कृतघ्नतामासादयामीति ।

तावप्येवमस्त्विति निगद्य तदनुज्ञाय सुरनरविद्याधरकारितमहोत्सवेन सङ्गीतेन गन्धर्वविद्याधरपत्नीनां दिवि वाद्यमानवादित्रेण मधुव्रतमाधव्योर्विवाहमहोत्सवं सम्पाद्य शैलूषमुख्यमुवाच—सामाजिकप्रीतये पूर्वं तावन्नय नाटकमिति ।

ततोऽहरवेशधारी नटउवाच—किं वोभूयः प्रियमुपकरोमि?

मधुव्रतवेशस्तमुवाच—

अविकलमस्तु जगज्जनेषु धर्म्मः।
स च तव भक्तिकृतेस्त्वनन्यकामः।
अथ खलु सापि तवाङ्घ्रिसङ्गसिद्धै
र्धृतकरुणा रसवाहिनी सदास्तु॥३३॥

सुनन्दवेश पुरुषः प्रणम्योवाच च—

यत्र सम्भवगभीरवारिधौ सम्पतामि वनिपातिकर्म्मणा।
तावकस्मरणमेव तत्र नौ नौरिव प्रमथनाथ! जायताम्॥३४॥

चण्डवलवेशउवाच—

हर हर पापकृतिं जगज्जनानां
शिव शिवदोभव भावभक्तिभाजाम्।
भव! भव सम्भवभीतिभार भारभाजो
मम ममतामयवन्धमोचनाय॥ ३५॥

ततोऽहरवेशधरः—एवमस्त्विति निगद्य निष्क्रान्तः।

ततश्चन्द्रशेखरोऽप्येवमस्त्विति निगद्य दिव्याभेदयानेन पुरमलङ्कृत्य सुरपुरं सनाथीकृतवान्। सामाजिका अपि तदद्भुतं वीक्ष्य हृष्यद्रोमाणः स्वाभिमतान् देशानभिजग्मुः। कुमारावपि भगवता चन्द्रशेखरेणाभिषिक्तौ देवदत्तविमानेन करवीरपुरं समागत्य तारावत्याः पुत्रान्तरमुपरिचरनामानं राज्यपालनाय नियुज्य स्वप्रभावेन उपरिचरं पुरं प्रकल्प्य माधव्या सह दिव्यभोगपरायणः। सुनन्दोपि सदानन्देन योगपरायणः एवं तावुभौ सौभ्रात्रेणाभ्रान्तमानसौ साम्राज्य लक्ष्मीमनुभुजाते। ततो भगवदादेशपालनपरः शिवपुरंवसतिं समीक्ष्य-

मानी मधुव्रतो माधव्यां सुदर्शनामानं विद्याधरचक्रवर्त्तिनं पुत्रमुत्पाद्य तथा सुनन्दोऽपि विवेकविशेषादविशेषदृष्टिः सुरभिवंशप्रसूतायां कामधेन्वां पुत्रमात्रकामः शृङ्गं नाम रुद्रवाहनं वृषमुत्पाद्य सहस्रवर्षान्ते शिवसालोक्यं सामीप्यञ्च समेत्य गणाध्यक्षौ भूत्वा पूर्ववद्विरेजतुः ॥

अप्राकृतं समुपभुज्य चिराय राज्यं
जित्वा क्रमेण करणारिगणांश्च योगैः।
पश्चात्तदीश्वरपदं परमं प्रयाता-
वेतौ यथा ननु भवन्तु तथा भवन्तः ॥३६॥

श्रीलश्रीरघुनाथदेवशिवदादेव्योस्तनूसम्भवः
शम्भोर्भक्तिमृणालतन्तिरमलः श्रीराजहंसार्भकः।
पौराण्या नवचन्द्रमौलिकथया श्रीराममाथः स्वयं
चम्पूं गुम्फितवान् तदीयकथयोच्छ्वासोऽद्य सम्पूर्णतां गतः ॥ ९ ॥

॥इति चन्द्रशेखरचम्पूकाव्ये मधुव्रतमाधवीयाख्यो द्वितीयः खण्डः।

॥ समाप्ता नवोच्छ्वासवतीयं चम्पूः ॥





५९ बृहदारण्यक (उपनिषद्) [भाष्यसहित] ... १॥०

६० सुश्रुत ... ४

६१ शार्ङ्गधर [वैद्यक] ... १

६२ वेतालपञ्चविंशति ... ॥०

६३ पातञ्जलदर्शन [सभाष्य-सटीक-सवृत्ति] ... ४

६४ आत्मतत्त्वविवेक [बौद्धाधिकार] ... २

६५ मुक्तिकोपनिषत् ... ।–

६६ उपमानचिन्तामणि ... ।

६७ नागानन्दनाटक ... १

६८ पूर्णप्रज्ञदर्शनम् । मध्वस्वामिकृतभाष्य सहितम् २

६९ चन्द्रशेखर चम्पू काव्यम् सम्पूर्ण ... ३

७० सामवेदस्य मन्त्रब्राह्मणम् भाष्यसहितम् ... २

७१ आरण्य संहिता भाष्य सहिता ... १

७२ विद्धशाल भञ्जिका नाटिका—सटीक ... १

७३ कारण्डव्यूह [बौद्धशास्त्रम्] ... २

७४ कुवलयानन्द—सटीक [अलङ्कार] ... १

७५ प्रियदर्शिका नाटिका-सटीक [श्रीहर्ष विरचिता] ॥

७६ सारस्वत व्याकरण—सटीक पूर्वार्द्ध ... १।

७७ वासवदत्ता—सटीक ... २

७८ पुष्पबाण विलासकाव्य[कालिदास कृतम्] सटीक ॥

७९ महिम्न शतकम्, पदारविन्द शतकम्, स्तुतिशतकम्, मन्दस्मित शतकम् कटाक्ष शतकम् ... १

८० मनुसंहिता कुल्लूकभट्टकृत टीका सहित... [illegible]

८१ नैषध [illegible]

८२ चन्द्रालोक (प्राचीन अलङ्कार ग्रन्थ) ... १

८३ वीरमित्रोदय [स्मृतिशास्त्र] ... १०

कलिकातासंस्कृतविद्यामन्दिरे—बि, ए, उपाधिधारिणः

श्रीजीवानन्द-विद्यासागर-भट्टाचार्य्यस्य

सकाशात् लभ्यानि।